Bhandarkar Oriental Research Institute, Poona.

# Lectures on Dharmaśāstra

BY

Mahāmahopādhyāya Shridharshastri Pathak

( Reprint from the Annals of the Bhandarkar Oriental Research Institute, Volumes XIV & XV )

Price One Rupee & Eight Annas

**Bhandarkar Oriental Reasearch Institute, Poona.**

# Lectures on Dharmaśāstra





BY

**Mahāmahopādhyāya Shridharshastri Pathak**

( Reprint from the Annals of the Bhandarkar Oriental Research Institute, Volumes XIV & XV )



Price One Rupee & Eight Annas

भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरम्

---

# धर्मशास्त्रव्याख्यानमाला ।

महामहोपाध्याय—
पाठकोपाह्वश्रीधरशास्त्रिग्रथिता




( Reprint from the Annals of the Bhandarkar Oriental Research Institute, Volumes XIV & XV )




मूल्यं सार्धरूप्यकम्

# प्राच्यविद्यासंशोधनमंदिरस्य कार्याध्यक्षैः डॉ० श्रीपाद कृष्ण बेलवलकर–इत्येतैः कृतं प्रास्ताविकं भाषणम् ।

अयि महाशयाः, तत्तच्छास्त्रनदीष्णा विद्वद्वरेण्याः, गुरुवर्याणां 'डॉक्टर भाण्डारकराणां' महनीयं नाम बिभ्रतः प्राच्यविद्यासंशोधनमन्दिरस्य कार्याध्यक्ष-पदे नियुक्तोऽहं मन्दिराधिकृतां प्रतिनिधीभूतः सन्नद्यास्मिन् शुभसमये तत्रभवतामेतत्सभास्थानमलंकुर्वतां सर्वेषां हार्दिक्यं स्वागतं व्याहरामि । न खल्वेतदत्रभवतामविदितं स्याद्यथा सर्वथा प्रतिकूलेपीदानींतने समये राजकीयशासनानुसारेणात्रत्यविद्याधिकारिणः वेदशास्त्रादिप्राचीनविद्याध्यापकानां पण्डितप्रवराणां, तथा च तदध्ययनाध्यापनैकपराणां संशोधनप्रकाशनादिकार्ये व्यापृतानां संस्थानामुत्तेजनार्थं प्रतिसंवत्सरं किमपि द्रव्यव्ययं कुर्वन्ति । इयं तु तेषां प्रवृत्तिः––अकरणान्मन्दकरणं श्रेयः––इति न्यायेनापि भृशमभिनन्दनीया । व्ययप्रकारस्तु प्रकाशितेभ्यः शास्त्रीयपुस्तकेभ्यः पारितोषिकप्रदानम्, प्रकाशार्हाणां तादृशपुस्तकानां प्रकाशार्थं साहाय्यवितरणम्, अथ च कंचन शास्त्रविषयमधिकृत्य व्याख्यानानि प्रयच्छतां विदुषां संभावनादिकरणम्––इत्यादिको वर्तते । तदर्थं चैका नियामिका समितिरपि वर्तते । अद्यारभ्य अस्मिन् संशोधनमन्दिरे श्रीमद्भिर्वेदशास्त्रपारावारीणैर्वेदान्तवागीशैः श्रीधरशास्त्रिभिः प्रदास्यमाना व्याख्यानश्रेणिरेवंप्रकारेण विद्याधिकारिभिरनुमता पुरस्कृता च वर्तते । व्याख्यानार्थं निमन्त्रणादिव्यवस्था तु अस्माकं संशोधनमन्दिरेण न केवलं राजशासनमिति किंतु स्वीयप्रेरणयापि महता प्रमोदेनाङ्गीकृता । यतः एतादृशा व्याख्यानादिप्रसङ्गा यद्यनेकशः अत्र मन्दिरे भवेयुः तदा एव मन्दिरस्यास्य "प्राच्यविद्यासंशोधनमन्दिर" मित्यभिधानं सार्थकतां प्राप्नुयात् ।

अस्तु नाम । तदद्य वेदान्तवागीशानां शास्त्रिमहाशयानां प्रथमव्याख्यानावसरे अध्यक्षपदं विद्वद्वरैः धर्मशास्त्रनदीष्णैः 'पाण्डुरङ्ग वामन काणे' इत्येतैरलंकर्तव्यमिति विषये अत्रभवतां पुरतोऽहं सूचनां करोमि । एते महाभागाः अत्रत्यानां सर्वेषां परिचिता एव वर्तन्ते । धर्मालंकारादिशास्त्रेष्वेतेषां प्रावीण्यमेभिः प्रणीतानां ग्रन्थानां द्वारा न केवलं भारते वर्षे किंतु पाश्चात्यदेशेष्वपि विद्वद्भिः सशिरःकम्पमनुमन्यते । एभिः आङ्ग्लभाषया प्रणीतो भारतीयधर्मशास्त्रस्येतिहासः मन्ये अद्यावधि एभिर्निर्मितानां ग्रन्थरत्नानां मेरुरिव वर्तते । तदेवंगुणविशिष्टा अध्यक्षा अद्यास्माभिरधिगता इति मन्ये महद्भाग्यमेतदस्य प्राच्यविद्यासंशोधनमन्दिरस्य तथाचास्या संसदः । अत एव मदीया अध्यक्षपदविषयिका सूचना अनुमोद्यतां भवद्भिः सभास्तारैरिति सप्रश्रयं प्रार्थये ।

## धर्मशास्त्रव्याख्यानमालाया उपक्रमावसरे श्रीयुत पाण्डुरङ्ग वामन काणे इत्येतेषां प्रास्ताविकं भाषणम् ।

अयि विद्वद्वर्याः । सुदिवसोयमद्य यन्महामहोपाध्यायोपपदविभूषिताः श्रीमत्पाठकमहाशया धर्मशास्त्रीयव्याख्यानषट्कमध्यात्प्रथमस्य व्याख्यानस्य करिष्यन्त्युपन्यासम् । धर्मशास्त्रं विषयो भवादृशाश्च शास्त्रमर्मज्ञाः श्रोतारोनेक-विद्यावगाहनपवित्रितचेतसो वृत्तस्वाध्यायसंपन्नाः श्रीमत्पाठकशास्त्रिणश्च व्याख्यातारः। एवमद्य सकलगुणानां समुदयः समुपस्थितः । एकमेव तु वैगुण्यमत्र दृश्यते यन्मादृशोस्मिन्महामङ्गलधाम्नि समयेध्यक्षपदवीं प्रापितः । गीर्वाण-भाषाया विरलप्रचारत्वाद्रात्रिंदिवमाङ्ग्लभाषया व्यवहरतो मम न सुकरः संस्कृतभाषया विषयोपन्यासो नैव च मया स्वाध्यायो नैरन्तर्येणाधीतो न वा शास्त्राणि परिशीलितानि नापि च वृत्तिः शास्त्रादिष्टेन एषा क्रियते । सभापाति-पदं मां प्रापयद्भिर्भवद्भिः स्नेहपरवशमानसैर्महान् मय्यारोपितो भारः । ये केचन दोषा वाक्चापलाय प्रचोदितेन मया कृता भवेयुस्तान्क्षन्तुमर्हन्ति भवन्तः ।

प्रथमं तावत्को धर्मः किमस्य स्वरूपं तत्र सुनिपुणं विचारणीयम् । चोदनालक्षणोर्थो धर्मः, यतोभ्युदयनिःश्रेयससिद्धिः स धर्मः, श्रुतिस्मृतिविहितो धर्मः, इज्याध्ययनदानानि तपः सत्यं दमः क्षमा अलोभ इति मार्गोयं धर्मस्याष्ट-विधः स्मृतः, अहिंसा परमो धर्मः, इत्याद्या विविधा धर्मस्य व्याख्याः कृतास्तेषु तेषु प्राचीनेषु ग्रन्थेषु । किं तु वर्णानामाश्रमाणां कर्तव्यकलापो धर्म इत्येव व्याख्या साधीयसी 'त्रयो धर्मस्कन्धाः,' 'धर्मं चर', 'स्वधर्मे निधनं श्रेयः' इत्यादिश्रुतिस्मृति-वाक्यैरुपदिष्टा ।

अधुना किं धर्ममूलं तद्विवेचनीयम् । मन्वादिस्मृतिषु श्रुतिः स्मृतिः सदाचारः स्वात्मतुष्टिरित्यादीनि धर्ममूलतया समुपन्यस्तानि । तत्र श्रुतिषु तावन्न कण्ठरवेण वर्णानामाश्रमाणां धर्मा विहिताः किंतु केवलं धर्मशास्त्रविषय-काणि तानि तान्यर्थवादरूपाणि वाक्यानि समुपलभ्यन्ते । तानि यथा--'मनुः पुत्रेभ्यो दायं व्यभजत्', तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति,' 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः,' 'केवलाघो भवति केवलादी' इत्यादीनि । वेदे धर्मशास्त्र-विषयकविधीनामभावादापस्तम्बेन ' मनुः पुत्रेभ्यो दायं व्यभजत्' इति एषैव श्रुतिः सम्यगर्थस्य प्रापिका 'ज्येष्टो दायाद इत्येके तच्छास्त्रैर्विप्रतिषिद्धम्' इति सूत्रद्वयं प्रणयता प्रतिष्टापितम् । तस्माच्छ्रुतिस्तावन्न धर्मशास्त्रे निर्णायकं प्रमा-णम् । कैश्चनाचार्यैः स्मृतीनां प्रामाण्यमुत्सन्नवेदमूलमिति महता संरम्भेण घोष्यते । किंतु तदिदं न तथा संतोषं विश्वासं वा जनयति। सुकरमेव सर्वेषां बौद्धादीनामपि वक्तुं यदुत्सन्ना वेदपाठास्तेषां मतान्युपोद्बलयन्तीति । तस्मादु-त्सन्नवेदशाखामूलत्वं सर्वस्मृतीनां प्रामाण्यार्थं नैवादरणीयमिति प्रतिभाति ।

स्मृतिष्वपि बलाबलविचारो न सुनिश्चेयः । शताधिकानां स्मृतीनां मध्यात्का श्रेष्ठा कस्या वशेनेतरा नीयेरन् इत्येव तावन्निश्चेतुं सुदुष्करम् । मदीये धर्मशास्त्रैतिह्यविचारके ग्रन्थे स्मृतीनां कालनिर्णयविषये महता प्रबन्धेनोपन्यासः कृतः । भिन्नेषु भिन्नेषु कालेषु स्मृतयः प्रवृत्ता इति तत्र प्रदर्शितम् । पराशरेणापि सम्यगुक्तं ' कृते तु मानवा धर्माः' इति । धर्मशास्त्रीयनिबन्धकारैः पूर्वमीमांसायां महर्षिणा जैमिनिना प्रतिष्ठापिता न्यायाः स्मृतिवाक्यविचारेषु समुपाश्रिताः । यत्किंचिदेकस्यां स्मृतौ नोपलभ्यते तदन्यस्मृतितस्तस्मिन् तस्मिन् विषय उपसंहरणीयमिति निबन्धकृतां पन्थाः । सर्वस्मृतीनामेकवाक्यताकरणाय सर्वैर्निबन्धकारैर्महान्यत्नः क्रियते । यत्रैकवाक्यता दुष्करा तत्र विकल्प आश्रीयते, अथवा काश्चन स्मृतयो युगान्तरविषया इति समाधानं समुपक्षिप्यते ।

एतस्मादेव कारणात् केषुचित्पुराणेषु सर्वेषु निबन्धग्रन्थेषु कलिवर्ज्यं नाम प्रकरणं दृश्यते । कालनिर्णयसिद्धान्ते कलिवर्ज्यानीत्थं समुदीरितानि –

मद्यं गोहयगोश्वमेधकरणं ज्येष्टांशकोद्धारणं
व्यूढायाः पुनरुद्वहं वरसुरातिथ्यर्थमन्तं पशोः ।
आदेशात्सहजास्त्रियां सुतजनिं ब्रह्मव्रतं निष्टया
वानप्रस्थगतिं कमण्डलुधृतिं स्तेयान्यपाप्युद्धृतिम् ॥
सङ्कोचं गुणवत्तयाघनिकृतौ युद्धोद्यतास्त्रांद्विज-
प्राणान्तं द्विजपापनिष्कृतिमसुभ्यो विप्रशामित्रकम् ।
मातुर्वंशसपिण्डजापरिणयं हीनादथान्नाहृतिं
दत्तौरसकसुतान्यपालनमिराग्राहं च सौत्रामणौ ॥
सोमस्य क्रयणं प्रमां च शकुने सामुद्रिकोपश्रुति-
स्वप्नादिष्वसवर्णजोद्वहमथो विप्राब्धिनौप्रस्थितिम् ।
प्रस्थानं महदग्निहोत्रहवणीलिहावलीढग्रहा-
वित्यादीनि कलौ त्यजेदथ हरेराख्यागुणान् कीर्तयेत् ॥

इति । अत्र समुदीरितानि कर्माण्येकदा धर्मव्यपदेशभाञ्जि समभवन् कालवशात्तानि लोकविद्विष्टानि संजातानि पश्चादधर्मपक्षे स्थापितानि । एतस्मादेवमनुमीयते यत्तेषु तेषु कालेषु श्रुतिस्मृतिषु समनुमोदितानि चोदितान्यपि वा कर्माणि यदि लोकविद्वेषस्थानं भवन्ति तदा तानि त्याज्यानि भवन्ति । तेषां त्यागेन न कोऽप्यधर्मः सुतरां जायते प्रत्युत धर्म एव कृतो भवति ।

स्मृतीनां पुराणानां च परस्परं विरोधो दृश्यते । तत्र कथं वर्तितव्यमेतदपि सम्यगालोचनीयम् । श्रीमद्भिर्नीलकण्ठभट्टैर्मीमांसकधुरंधरैरपि व्यवहारमयूखे प्रतिपादितं यद् दत्तकविषये कालिकापुराणवचनं यमलविषये भागवतवचनं वा तत् न तथा प्रमाणपदवीमारोहति 'पुराणेषु स्मृतिविरुद्धाचाराणां बहुशो दर्शनात्' इति ।

शिष्टानामाचारो धर्ममूलमिति गौतमवासिष्ठापस्तम्बमनुयाज्ञवल्क्यादिभिः स्मृतिकारैः प्रतिपादितम्। बौधायनेन च पञ्चधा विप्रतिपत्तिराचारविषया दाक्षिणात्येषु उदीच्येषु च प्रदर्शिता। 'आचारः परमो धर्मः' इति मनुना गीयते। तस्माच्छिष्टानामाचार एव धर्म इति वक्तुं युक्तम्। किंतु बहवो निबन्धकृतो वदन्ति यदि शिष्टाचारः स्मृतिविरुद्धस्तदा न सोऽनुसर्तव्य इति। 'यत्तु समानं तद्वक्ष्यामः' इति आश्वलायनगृह्यसूत्रं व्याचक्षाणेन हरदत्तेनोक्तं 'तेन जनपदादिधर्मस्य वक्ष्यमाणस्य च विरोधे वक्ष्यमाणमेव' इति। शिष्टाचारश्च मन्दमतिभिरपि द्रष्टुमनुसर्तुं च सुकरः। तस्मात् 'महाजनो येन गतः स पन्थाः' इति शतसाहस्र्यां संहितायां यदुक्तं तदेव लोके बहूनां कर्तव्यं भवति। शिष्टाश्च के इति तावद्वक्तव्यम्। तत्र तैत्तिरीयोपनिषदि 'ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युर्यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः' इत्युपदिष्टम्। विदुषां धर्मकामानां नित्यमद्वेषरागिणां शिष्टानां परिषद् यद्धर्म इति निश्चिनुयात्स एव धर्म इति व्यवासितुं सांप्रतम्।

अधुनातनानां केषांचिदेवं मतं यन्नवीना स्मृतिर्विरचनीयेति। यदा यदा हि कोपि ग्रन्थः स्मृतिरिति समाद्रियते तदा तदा न स नवीनो भवति। तस्मात् न कोप्याधुनिको ग्रन्थः स्मृतिव्यपदेशभाक् भवेदस्मिन्काले। किंतु प्राचीनां विचारसरणिमनुसृत्य मीमांसकन्यायानुपाश्रित्य देशकालौ वीक्ष्य यदि कश्चिन् निबन्धो रचितो भवेत्तर्हि महानुपकारो भवेत्। नैष आधुनिकानां आग्रहो यत्समुद्रयान-प्रौढस्त्रीविवाह-अस्पृश्यस्पर्शनादि-विवादास्पदीभूतानामाचाराणां सुधर्मत्वेन स्वीकारः सर्वैः कर्तव्य इति किंतु ते त आचारा यदि कैश्चित्कृता भवेयुस्तर्हि ते जना धर्मबाह्याः असंव्यवहार्याः पतिता भवन्तीति यत्कैश्चित् सनातनधर्माभिमान्यैर्महता कोलाहलेनोद्घोष्यते तन्न समीचीनं न तेन कोप्यर्थः सनातनधर्माभिमानिनामपि घटेत।

एवं येषु येषु विषयेषु सर्वैर्विचारः कर्तव्यास्ते त ईषन्मात्रं प्रदर्शिताः। श्रीमत्पाठकमहाशया अधीतसर्वधर्मशास्त्रनिबन्धत्वात् परिचिताधुनिकविचारसरणितया च व्याख्यानषट्के सर्वेषां विषयाणां विवरणं करिष्यन्ति धर्मशास्त्रविषयेषु सनातनीयानामाधुनिकानां च संमतं कमपि मार्गमुपदेक्ष्यन्ति इत्याशासे।

---

# धर्मशास्त्रव्याख्यानमाला ।

## प्रथमं व्याख्यानम् ।

१ वेदादिवाग्विस्तरार्थनिर्देशः ।

२ वेदाद्यर्थस्य सापेक्षत्वनिरपेक्षत्वमीमांसा ।

सभ्यप्रार्थनादि — अयि सभाध्यक्षाः । वेदादिविद्यावारिधिनिमग्नस्वान्ताः शान्ता निर्मत्सरा विद्वांसः । यदर्थमहमत्रोपस्थितो यच्च मया प्रत्यश्रावि सभाधिकारिभ्यस्तत्सर्वं श्रीमद्भिः श्रुतचरम् । अधुना स्वीयं कार्यं निर्वोढुं प्रयते । तत्र प्रथमं मया वेदादिवाङ्मयस्य सारार्थः संक्षिप्ततया यावच्छक्यं कालक्रमानुसारं निर्देश्य इति समापतति । प्रत्येमि यत् – अगाधस्य वेदशास्त्रमहोदधेः परिचयो मुष्टिंपचमतिना मयाऽल्पीयसाऽनेहसा विशेषतः सर्वविदां तत्र भवतां समाजे कारयितुमशक्यस्तथापि "नभः पतन्त्यात्मसमं पतत्रिणः ।" इति वैयासिकवचोऽनुसारं यथामति तत्र धृष्णोमि ।

२ वेदार्थसंक्षेपः — तथा च – विभज्य आसयतीति व्यासः । वेदानां व्यासः, वेदव्यास इति व्युत्पत्तिसंदर्शितपथेन भगवता व्यासेन चत्वारोंऽशाः संहितानामृग्यजुःसामाथर्वणिकीनां पैलादीन् स्वशिष्यान् पाठिताः । ते च संहितांशा अपौरुषेया इति मीमांसकानां मतम् । वैयाकरणादिभिस्तु तत्रापि पौरुषेयत्वमुररीक्रियते । तत्र दाशतय्यां तद्देवतानां स्तुतयः सूक्तापरपर्यायाः समुपलभ्यन्ते । यजुःष्वाध्वर्युवेदापरनामधेयेषु हविर्दानपूजनात्मकानि कर्माणि गाथामन्त्राश्च । साम्नि गीत्यात्मके औद्गात्रोपयोगिनो मन्त्राः । आथर्वणे तु यज्ञबहिर्भाग उपयुज्यमाना यज्ञोपहन्तृविशसनात्मकाः सर्पादिविषविघातका यज्ञीयब्राह्मकर्मप्रतिपादका वा मन्त्रा दरीदृश्यन्ते ।

ब्राह्मणग्रन्थस्वरूपम्

३ ततस्तद्व्याख्यारूपा ब्राह्मणग्रन्था वेदविवरणार्थं प्रवृत्ताः । ऋचैव हौत्रं, यजुषैवाध्वर्यवम्, साम्नैवौद्गात्रम्, त्रिभिर्ब्रह्मा आथर्वणिकेन वेत्यादिवचसा वेदमन्त्राणां कर्मविधीनां च संबन्धं बोधयितुं प्राधान्येन प्रावर्तिषतेमे ब्राह्मणग्रन्थाः । इमे तैत्तिरीयैतरेयशातपथगोपथादिरूपा ब्राह्मणग्रन्था गद्यरूपाः क्वचित् शतपथे च स्वरविशिष्टा अपि समुपलभ्यन्ते । तत्र तैत्तिरीयैतरेयादिषु 'विनियोजकं

वाक्यं ब्राह्मणम्' इति मामांसकलक्षणलक्षिततया लिङ्लोट्तव्यप्रत्ययान्तास्तत्तद्याज्ञिककर्मबोधकविधयः समुपलभ्यन्ते। अत्र ब्राह्मणेषु त्रिधा व्याख्या-१ प्रथमं मन्त्राणां विनियोगविधिः। २ ततो मन्त्रगतानां कतिपयानां विषमपदानामर्थनिर्देशः। ३ अथ च तृतीयेंऽश इतिकर्तव्यता विशेषतः संबन्धवैधुर्यवती चार्थवादरूपाख्यायिका। ईदृश्यः संबन्धविधुरा अप्याख्यायिका न वैरस्याय भवन्ति यतस्तासु प्रभूताः प्रशस्तास्ताः साहित्यविलसितत्वाद् बहुमानास्पदं च। अत्र बहुशः "एवं ब्रह्मवादिनो वदन्ति" इति पण्डितानां तत्तत्कर्मविचिकित्सानिरासका विवादास्तत्र तत्र श्रूयन्ते। त एवोहादिद्वारा धर्मशास्त्रीयसंशीतिहरत्वेनोपयुज्यन्ते। निबन्धकृद्भिः क्वचित्तथोपयोजितमपि। किं चेमा आख्यायिका इतिहासप्रवणमतीन् पुराणवस्तुसंशोधकांश्चोपकुर्वन्ति। संहितांशे देवतास्तुतयः। ब्राह्मणांशे कर्मविधय इति प्रभूतं तारतम्यं मन्त्रब्राह्मणयोर्विवरीतुं शक्यं किंतु विस्तरभीतिरिमं प्रपञ्चं निरुणद्धि। ब्राह्मणग्रन्थो यथा वेदार्थसंदेहापहारी तथा शिक्षाव्याकरणादीनि षडङ्गान्यपि। कल्पविषये त्वनुपदमेवोच्यते।

४ ब्राह्मणे वेदत्वातिदेशः—ततस्तत्र काले संप्रवृत्तेन कर्मविधिमाहात्म्येन संप्रेरितो भगवान् कात्यायनमहर्षिः "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति सूत्रयित्वा ब्राह्मणभागेऽपि वेदत्वमातिदिदेश। ततः प्रभृति ब्राह्मणग्रन्थेऽपि, "श्रूयते, श्रुतिः, आम्नायः" इति वाक्प्रचारोऽनिरुद्धसंचरः पदं लेभे। तत्र ब्राह्मणेषु कानिचिन्नवीनानि कानिचित् प्राचीनानीति "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" इति भगवतः पाणिनेः सूत्रात्प्रतीयते। पुराणेति किम्। याज्ञवल्क्यानि ब्राह्मणानीति तत्प्रत्युदाहरणं सूत्रव्याख्याकृद्भिः प्रदर्श्यते। तेनैव संजाघटीति ब्राह्मणविषये पौरुषेयत्वसंशीतिः केषांचित्। एतेषामेव चरमांशा आरण्यकरूपाः तत्र प्रायः कर्मगतानां कतिपयानामुद्गीथाद्यङ्गानामुपासनाः।

५ काण्डत्रयोपयोगः—ततश्च कर्मणा चित्तशुद्धिः, उपासनया चित्तैकाग्र्यम्, ज्ञानेन मोक्षः, इति तार्तीयस्थितिसमधिगतये उत्तरकाण्डे वेदशिरोभूतोपनिषत्सु ज्ञानं प्रतिपाद्यते "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः। एवमेव वेदगतकाण्डत्रयार्थनिर्णायकानि जैमिनिबादरायणसूत्राणि। उपनिषदर्थग्रथनार्थत्वात्सूत्राणामिति श्रीशंकरभगवत्पूज्यपादाः। अत एव विंशत्यध्यायात्मिका मीमांसा संप्रवृत्ता। तत्र द्वादशाध्यायाः कर्मकाण्डगताश्चत्वार उपासनार्थनिर्णायका देवताकाण्डापरपर्यायाः संकलनया षोडशैते जैमिनिप्रणीता एव। अथ चोपनिषदर्थप्रतिपादकाश्चत्वारो बादरायणमहर्षिप्रणीता उत्तरमीमांसासूत्राध्यायाः। सोऽयं विलसति काण्डत्रयानुयायिनां पन्थाः।

६ सूत्रग्रन्थोद्भवः— परं ये केवलं पूर्वकाण्डीयेन यज्ञविधिना सदाचारेण च स्वीयमैहिकं पारलौकिकं च फलं कामयमाना अनुतिष्ठन्ति विधीनेव केवलं तदर्थमत्र किंचिदिव मीमांस्यते। अपि श्रुत्यर्थचणा विद्वन्मिश्राः। ब्राह्मणार्थं तद्गतविधिं च दुरूहं मन्वानानां कृतेऽश्वलायनबौधायनकात्यायनादिभिः कल्पसूत्राणां प्रणेतृभिः स एव ब्राह्मणगतः कर्मविधिः सूत्ररूपेण ग्रथितः। सूत्रं नाम – आख्यायिकार्थवादरहितो ब्राह्मणांश इत्युक्त्या नापराधिनमात्मानं कलये। यत एतदेव सूत्राणां स्वरूपम्। तथा च यावच्छक्यं ब्राह्मणाक्षराण्येव सूत्रेषु दृश्यन्ते। एवमयं सूत्रग्रन्थः सौकर्यायानुष्ठातॄणां सुग्रहः। सूत्रेषु च प्रकारत्रयम् — १ श्रौतसूत्राणि, २ स्मार्तसूत्राणि, ३ धर्मसूत्राणि च। यथा ब्राह्मणग्रन्थेषु श्रौता यागविधयस्तादितिकर्तव्यतारूपाणि निरूपणानि तथैव श्रौतसूत्रेष्वपि संभवन्ति तानि वह्नित्रयसाध्यानि कर्माणि।

सूत्रग्रन्थोद्भवः

स्मार्तसूत्राणि -- श्रौतसूत्रग्रथनानन्तरं स्मार्तसूत्रप्रणयनम्। यतः श्रौताग्निहोत्रादौ "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इति विधानात् जातपुत्रस्याधिकारः, जातपुत्रत्वं च विवाहमन्तरानुपपन्नं ततश्च 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायेन जातपुत्रत्वं धर्म्यं विवाहमाक्षिपति। तदर्थं विवाहादयः षोडश संस्कारा एकाग्निसाध्यानि श्रवणाकर्मस्थालीपाकादीनि तैरेवाश्वलायनादिमहर्षिभिः स्वगृह्यरूपेण स्वशाखानुसारं ग्रथितानि।

धर्मसूत्राणि—अनन्तरं च तत्तत्कर्मसदाचारादिविषयकविचिकित्साविनिवर्तकानि धर्मसूत्राण्यवातारिषुः। तेषामवतारप्रकारश्चेत्थम्। यदा यदा कर्मविचिकित्सा वा वृत्तविचिकित्सा वा संजाता तदा तदा गुरूणां शिष्याणां च शास्त्रविषयिणी मीमांसा प्रवर्तते स्म। कदाचिद् ब्राह्मणग्रन्थेषु तत्समानकक्षीयाः संशीतयः समुत्तारिताः पुराणेषु वा। अत्र नैवमनुयोक्तव्यं यद्ब्राह्मणग्रन्थात्प्राक्तनानि अधुनोपलभ्यमानानि पुराणानीति। नेति तदुत्तरम्। किं तु पुराणं नाम किमप्याख्यायिकारूपं ब्राह्मणात्प्राक्तनं ग्रन्थजातमासीत्। शातपथीयबृहदारण्यकादिषु — "तस्यैतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः ... ... ... वाको वाक्यं पुराणमितिहासः" इत्यादिनिर्देशात्। ब्राह्मणेषु पुराणशब्दः सामान्यतो जगदुत्पत्तिमीमांसेत्यर्थे समुपयुज्यते। एवं च पूर्वोक्ता गुरुशिष्याः ब्राह्मणपुराणपर्यालोचनया शास्त्रसंस्कृतबुद्ध्या च समाप्य वादं सूत्ररूपेण सिद्धान्तं ग्रथयामासुस्तान्येव धर्मसूत्राणि। यद्यपि प्राक्तनविवादस्तत्र नोपलभ्यते तथापि सिद्धान्तेनानु-

धर्मसूत्राणि

पुराणप्राक्तनत्वविचारः

मातुं शक्यः सः । इमान्येव सूत्राणि गौतमबौधायनापस्तम्बादीनि धर्मसूत्राणि स्मृतीनां निदानम् । तत्र कानि सूत्राणि काः स्मृतीः प्रयोजयति किं वा तेषां पौर्वापर्यमिति तृतीये व्याख्याने पर्यालोचयिष्यामः ।

पुराणमहाभारते — अधुना पुराणविषये समुपक्षिप्यते – ब्राह्मणग्रन्थानन्तरं जायमानेषु पुराणेषु "वंशो मन्वन्तराणि" इत्यादिश्लोकबोधितरीत्या वंशादीनि पञ्चाङ्गानि वर्णितानि । यथा श्रीमन्महाभारते वैयासिके कुरुराजेतिहासानुरोधाद् बहूनि राजधर्माद्युपाख्यानानि सर्वजनकार्याकार्यसंदेहापहारकाणि समुपलभ्यन्ते । तत्र पुराणेषु परिकीर्तिता विविधाः कथास्ता अनुसृत्य स्मृतीनां प्रणयनं, ततः पुराणानि धर्ममूलमिति स्मृतिव्याख्यातृभिरुरीक्रियते । पुराणकथा आहत्य धर्मनिर्णय आसीत् । धर्मसूत्रेषूपोद्बलकत्वेन पुराणवचांसि स्वीक्रियन्ते ।

रूढिप्राबल्यम्

शास्त्रापेक्षयाऽपि रूढेराचारापरपर्यायायाः श्रेष्ठत्वमासीदिति द्योतयितुं पुराणमाहात्म्यप्रदर्शकं नारदस्मृतिवचो हेमाद्रिणा संकलितम् ।

वेदाः प्रतिष्ठिता देवि पुराणे नात्र संशयः ॥
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ १ ॥
उभाभ्यां यत्र दृष्टं न तत्पुराणेषु गीयते ॥

एवं नारदीयपुराणे महाभारते च – "अन्धस्य यष्टिरिव वेदानां पुराणानि" इति प्रत्यवादि । मीमांसकैः स्मृत्यपेक्षया पुराणानां गौणत्वं स्वीक्रियते । आदित्यपुराणे तु कलिवर्ज्यत्वेन केचिद्धर्मशास्त्रबोधितविधिनां निषेधाः प्रतिपाद्यन्ते । अतः पुराणैर्बाध्यत्वं धर्मशास्त्रस्य । ते चाधुनातनन्यायालयाध्यक्षैरुपयोज्यन्ते ।

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहाः ।
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ॥
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ।
ब्राह्मणादिषु तु शूद्रस्य पक्तादिक्रियापि च ॥
भृग्वग्निमरणं चैव वृद्धादिमरणं तथा ।

पुराणेन शास्त्रस्य बाध्यत्वम्

इदं वर्ज्यप्रकरणं पूर्वं न्यायालये नियोज्यमानैः पण्डितैरङ्गीक्रियते स्म । तैः पुराणानामुपपुराणानां चोपोद्बलकत्वेन स्वीकारः कृतः । तैः पुराणवाक्यानि स्मृतिवाक्यानीव संमानितानि । (पराशरमाधवीये श्रुतिमालम्ब्य पूर्वपक्षयित्वा पुराणवचोऽनुसरणेन तत्खण्डनं बहुषु स्थलेषु समुपलभ्यते) यतः पुराणेषु चातीव साहश्यम् । तथा च – कूर्मपुराणमुशनःस्मृतिश्च समा । याज्ञवल्कीय-

श्राद्धकल्पः अग्निगरुडपुराणे च समे । भविष्यपुराणस्थाः केचिदंशा मनुस्मृत्या समाः । यद्यपि पुराणं न धर्मशास्त्रं तथापि तत्तत्कालीनरूढिदर्शकत्वेन उद्धृतस्त्यादिषु रघुनन्दनादिभिराद्रियते । रघुनन्दनेन स्मृतिसंमतोऽसवर्णविवाह आदित्यपुराणप्रामाण्यान्निरस्तः । आदित्यपुराणे च–

समयश्चापि साधूनां प्रमाणं वेदवद् भवेत् ।

इत्युक्तम् । पुराणैः कालदेशपरिस्थित्यनुरूपं योग्यमेवाचरितम् । पुराणभारतादीनां ग्रथनमनु व्यतीते बहुतिथे काले साहित्यग्रन्थानां काव्यनाटकादीनां प्रग्रथनम् । प्रकृतेऽस्माभिर्धर्मशास्त्रविषय एवोपक्षेपः कर्तव्योऽतः पूर्वोक्तग्रन्थमहोदधौ समुपलभ्यमानानि धर्मशास्त्रविषयसंसूचकानि लिङ्गानि कालानुरोधात् कियन्तिचिन्निर्दिश्यन्ते । तत्प्रदर्शने दायभागविषय एव विशेषतः समादरः कर्तव्यः प्रसङ्गानुरोधात् । अतस्तान्येव प्रदर्श्यन्ते ।

प्राचीन -- व्यवहारधर्मशास्त्रनिर्देशाः —

१ मनुः पुत्रेभ्यो दायं व्यभजत् । तै० सं० ३-१-९-४

२ तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति । तै. सं. २-५-२-७

३ तस्मात् स्त्रियो निरिन्द्रिया अदायादीरपि पापात्पुंस उपस्तितरं वदन्ति । तै. सं. ६-५-८-२

४ शाकुन्तलम्– षष्ठोऽङ्कः । –
राजा- (अनुवाच्य) कथम् । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता । वेत्रवति बहुधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् । प्रतीहारी — देव । इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते ।
राजा — ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

५ न जामये तान्वो रिक्थमारैक् (ऋग्वेद) ३-११-२ निरुक्ते-- ३-५

६ बृ. आ. २-- ब्रा. ४ कं. १–
मैत्रेयीति होवाच याज्ञवल्क्यः । उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करिष्यामि ।

७ पातञ्जलमहाभाष्ये १-२-३
न वा राजाज्ञास्ति न वा धर्मसूत्रकाराः पठन्ति । (अनेन राजाज्ञा वा प्रमाणं धर्मसूत्रकारा वा प्रमाणमिति पातञ्जलमतं प्रतीयते । )

तत्र धर्मशास्त्रं किं तद्ग्रन्थाश्च के तत्स्वरूपं च कीदृग्विधमिति तृतीये व्याख्याने प्रदर्शयिष्यामः। पूर्वं तदुपयोगित्वेनाद्य स्मृत्यादिधर्मशास्त्रग्रन्थानां वाच्यलक्ष्याद्यर्थाः कथं निर्णेया इति मीमांस्यते। 'वचनस्य नातिभारोऽस्ति' इति धर्मशास्त्रे स्वीक्रियते तेन लक्ष्यार्थस्य न तत्र संभावना। व्याख्याकृतां श्रीविज्ञानेश्वरप्रभृतीनां सरणावालोक्यमानायामिदं मतिपथमाटीकते यत् तैर्यावच्छक्यं ग्रन्थकालक्रमाद्यनपेक्षं सर्वेषां स्मृतिग्रन्थानां मूलात्पूर्वभाविनां पश्चाद्भाविनामपि चार्थं समन्वितं कृत्वा मूलार्थो विव्रियते। स एव च न्यायालयस्थैराद्रियते कदाचित्तेन मूलविरोधी विप्लवोऽपि समुद्भवति। तदधुना यथामति विवृणोमि।

टीकाकृतां पन्थाः

अयि श्रेष्ठाः। मीमांसाशास्त्रे गुणोपसंहारो नाम समादृतः कश्चन साधीयान् पन्थाः। तेन श्रौतस्मार्तसूत्रोक्तविधिषु तत्तत्सूत्रेऽनुक्तानि कानिचित् कर्माणि भवन्ति तेषां 'अनुक्तमन्यतो ग्राह्यम्' इति वाक्यात् सूत्रान्तरात् ग्रहणं यत्र सर्वे विधयस्तत्र समुपलभ्यन्ते तत्र तं सूत्रान्तरान् स्मृतिभ्यो वा संग्रहणम्।

गुणोपसंहारविचारः

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्॥

इति कात्यायनस्मृतेः। एतावता व्याख्याकृतामयमधिकोपक्षेपः सर्वत्र न गुणोपसंहारन्यायानुसारी। किंच भो विचारचातुरीचतुराः। इदमन्यदप्येकं ध्येयम्। निबन्धानां व्याख्याकृतां च प्रामाण्यं स्मृतिवन्नाप्रतिहतप्रसरं किं तु प्रमाणान्तरावलम्बि। यतः स्मृतीनामुपदेशविधयाऽस्ति प्रामाण्यं नाम। यतस्तदुक्तव्यवमतौ प्रत्यवायोत्पत्तिः। विहितस्याननुष्ठानादिति स्मृतेः पातित्यापादकं तत्। न तथा निबन्धकृताम्। सर्वशास्त्रनदीष्णानां तेषां तद्विचारविधया प्रामाण्यं नाम स्वयमस्माभिः स्मृत्यर्थकरणे नो चेद्वक्ष्यमाणविरोधस्तर्हि तदनुकूलमर्थकरणमन्यथा तत्त्याग इत्येव। द्वितीयः पन्थाः सर्वमीमांसकशिष्टसंमतोऽत एव तत्तैर्निबन्धकृद्भिः परस्परं वैमत्यं प्रदर्श्यते। एतत्तु नाविदितं निबन्धादिपर्यालोचयितॄणाम्। न चैवं प्रत्युत्थातव्यं यत्स्मृत्यन्तरसंमत्यैवाधिकार्थस्योपक्षेपो व्याख्याकृद्भिः कल्प्यते किं तत्र विवादास्पदमिति। अत्रैवं ब्रूमः। स्मृत्यन्तरसमन्वयविषये विचारो द्वितीयकक्ष्यां गतः प्रथमं निर्विवादं सर्वैरादृता सरणिरियम्। व्याकरणकोशादिभिराप्तवाक्यैश्च पदानां संकेतं गृहीत्वा प्रकरणसांनिध्यादिरूपिणी मीमांसकसरणिः संमाननीया। यद्यत्र व्याख्याकृतामैक्यं ततस्तु न विवादः। मम तु मतमेतत्।

व्याख्यानिबन्धकृतां प्रामाण्यस्य विचारः

संमता शास्त्रार्थसरणिः।

यदेवमेव सर्वत्र स्मृतिषु प्रवर्तनीयम् । सुलभार्थाक्षराणि स्मृतिवाक्यानि भवन्ति । मूलनिरपेक्षं क्वचित्तद्विरुद्धमपि व्याख्याकृत एव शरणीक्रियन्ते केश्चित् । तदर्थमेव मयेदमुपाक्षिप्यते । इदं विचारास्पदं—स्मृत्यर्थो व्याख्यादिसापेक्षो ग्राह्यस्तन्निरपेक्षो मूलैकशरणतया ग्राह्यो वा । द्वितीयः कल्पो राद्धान्तरूपः ।

मन्वादिस्मृतीनां प्रभूता व्याख्याः समुपलभ्यन्ते । (तासां सर्वासां नामानि तृतीयव्याख्याने कालनिर्देशपुरःसरं कथयिष्यामि ।)

मनुस्मृतौ व्याख्याष्टक विलसति । याज्ञवल्कीये च त्रिचतुराणि व्याख्यानानि । अयि श्रेष्ठाः । इदमत्र विचार्यम् । स्मृतिश्लोकार्थः १ सर्वथा सर्वस्मृत्यन्तरसमन्वितो ग्राह्यः । २ यावच्छक्यस्मृत्यन्तरसमन्वितो ग्राह्योऽथवा ३ तत्तद्व्याख्याकृत्प्रदर्शितस्मृतिसमन्वितो ग्राह्यः । नाद्यः । सर्वैः सर्वथा सर्वस्मृतीनामशक्योपलम्भत्वात् । न द्वितीयः । यावच्छक्यमिति पदस्य निरर्गलत्वात् । न तृतीयः । व्याख्याकृतां विरोधात्सर्वस्मृतिग्रहग्रहिलतया व्याख्याकृद्भिर्मूलस्वारस्यविरोध्यर्थप्रदर्शनाच्च । अत्र हेतुद्वये उदाहरणद्वयं प्रदश्र्यते प्रथितयोर्मनुयाज्ञवल्क्यस्मृत्योः ।

परस्परविरोधः ।

अर्थानर्थावुभौ बुद्‌ध्वा धर्माधर्मौ च केवलौ ।
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम् ॥

अस्य वाक्यस्यार्थो व्याख्याद्वये द्विधा । अत्र श्लोके मेधातिथिः—धर्माधर्मावेव केवलावर्थानर्थौ न गोहिरण्यादिलाभोऽर्थस्तद्विपर्ययो वानर्थः किं तर्हि धर्म एवार्थोऽनर्थश्चाधर्म इति बुद्‌ध्वा हृदि निश्चित्य कार्याणि पश्येत अथवार्थानर्थावपि शोध्यौ धर्मावपि धर्मस्य सारता बोद्धव्यार्थस्य फल्गुता । अथवा यत्र महाननर्थः स्वल्पश्चाधर्मस्तत्रानर्थं परिहरेत् । शक्यो हि महतार्थेनेषद्धर्मो दानप्रायश्चित्तादिना निराकर्तुम् । संनिपाते च व्यवहारिणां बहूनां वर्णक्रम आश्रयितव्य एष च दर्शने क्रमो वर्णानां यदार्थे तुल्यपीडा भवन्ति यदा त्ववरवर्णस्याप्यात्यायिकं कार्यं महद्वा तदा यस्य चात्ययिका पीडेत्यनेन न्यायेन तदेव प्रथमं पश्येत् न क्रममाद्रियेत राज्यस्थित्यर्थो हि व्यवहारनिर्णय इत्युक्तमतो न यथाश्रुतमादरणीयम् ॥ २४ ॥ इति व्याख्याति ।

कुल्लूकश्चैवं टीकयति — प्रजारक्षणोच्छेदाद्यात्मकावैदिकावर्थानर्थौ बुद्‌ध्वा परलोकार्थं धर्माधर्मौ केवलावनुरुध्य यथा विरोधो न भवति तथा कार्यार्थिनां कार्याणि पश्येत् । बहुवर्णमेलके तु ब्राह्मणादिक्रमेण पश्येत् ॥ २४ ॥

एवं च प्रथमायां व्याख्यायाम्– अर्थः कारणं, धर्मः कार्यम् । द्वितीयस्यां धर्मः कारणमर्थः कार्यम् । इति व्याख्यातृभेदः । उभावपि मीमांसकौ । अधुना मूलस्वारस्याविरोधे दृष्टान्तः ।

याज्ञवल्क्यस्मृतौ —

पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥ २—११८ ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ २—११९ ॥

मूलविरोधः

अत्र श्लोकद्वये वाक्यद्वयं सुविशदं जागर्ति । दायादानां न तद्भवेत् । दायादेभ्यो न तत् दद्यात् । इति क्रियापदाभ्यां पृथग्वाक्यत्वस्य प्रदर्शनात् । एकतिङ् वाक्यमिति च वैयाकरणानां घण्टापथः । तथापि मिताक्षरायां श्रीविज्ञानेश्वरैः पितृद्रव्याविरोधेनेत्यस्य भिन्नवाक्यस्थपदस्य विद्यया लब्धमेव चेत्यनेनेतरवाक्यस्थपदेन संबन्धो निरदेशि स न युक्तिसहः । अत्र व्याख्यातृमहोदयैः १ समाचारविरोधः २ नारदवचनविरोधः ३ कात्यायनवचोविरोधश्चेति हेतुत्रयं दर्शितम् । एवं च तदादृतनारदकात्यायनस्मृतिसमन्वयं कर्तुकामैः कथमपि संबन्ध आदृतस्तथापि स मूलस्वरसविरोधी यतो भगवान् याज्ञवल्क्यः संबन्धमिममपेक्षिष्यत चेत्कुतः समानार्थकं दायादानां न तद्भवेत्, दायादेभ्यो न तद् दद्यादिति क्रियापदं प्रायोक्ष्यत् । किं च सोऽयं व्याख्याकृत्संबन्धः पूर्वप्रणीतमनुस्मृतिविरोधकश्च । तथाऽत्र मनौ–

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥ ९—२०६

स्मृतीनां पौर्वापर्यम् ।

प्रोफेसर काणेमहोदयैर्धर्मशास्त्रमहोदधिसमालोडनप्रमाणितमतिभिर्याज्ञवल्क्यस्मृतिकालः क्रिस्तशकात्प्राक्तनशतसंवत्सरादारभ्य तच्छकानन्तरं शतत्रयपर्यन्तमित्युदलेखि । तथा कात्यायनस्य कालः क्रिस्तशकादनन्तरं चतुःशततमसंवत्सरादनन्तरं षट्शतमितसंवत्सरपर्यन्तमिति चोदलेखि । तेन सुस्पष्टमेतद्वक्तुं शक्यं यत्कात्यायनः स्मृतिकृद्याज्ञवल्क्यानन्तरजः । एवं च कात्यायनानुसारं याज्ञवल्क्यस्मृत्यर्थः शास्त्रयुक्तिविधुरः । प्राक्तनमन्वनुसारं तु युक्तिसहः ।

ततश्चेदं सिद्धं यद्याज्ञवल्क्यमतेन निरुपधि विद्याधनमविभाज्यं, इति स्वरसतया पूर्वतनस्मृत्यनुकूलतया च सिध्यति । व्याख्याकृद्विज्ञानेश्वरमतेन तु पितृद्रव्याविरोधेनेत्युपधिना सह तदविभाज्यमिति सिध्यति तच्चोक्तप्रकारेण शास्त्रयुक्तिविधुरम् । श्रीविज्ञानेश्वरैर्मिताक्षरायां प्रथमाध्यायपञ्चम-

श्लोके "एतेषां प्रत्येकं प्रा

क्रियते

विज्ञानेश्वरस्य स्वोक्ति- विरोधः । तदुक्तं

निर्गच

तत्रैव स्मृत्यन्तरसमन्वयः क
अत्र विद्याधनविषयकस्मृतौ
केवलं स्वकालिकविद्याधनवि
वचसा याज्ञवल्कीयं समि
यथा —

नेक्षेतार्कं न नग्नां
न च मूत्रं पुरीषं

तत्र स्मृत्यन्तरस्य मन्व

सर्व

साकाङ्क्षे योजना भगव

तद्ग

दैव सूर्यालोकननिषेधः किं

नेक्षेतोद्यन्तमा

इति मनुस्मृतिसमन्वि
स्मृतिचन्द्रिका-जीमूतवाह
कालाभावाद्विरम्यते ततः ।
व्याकरणमीमांसादिनियम
तनस्मृत्यन्तरसमन्वय आदरणीयो नान्यत्र । व्याख्याकृतो निबन्धकृतश्च कुतः समन्वयग्रहग्रहिला भवन्ति तत्र राजकीयं कारणं तत्तत्कालीनसमाचारविरोधोऽथवोभयपक्षसंसाधनार्थोपयोगिमीमांसा*

जयकरविद्याधननियमः

लापनचातुरी वा प्रयोजिकेति सविस्तरं मीमांस्येत पञ्चमे व्याख्याने । अबहुतिथे काले व्यतीते विद्याधनविषये नवीनो राजनियमो मान्यवरजयकरमहोदयसंसूचनया समभूत्तत्र वयमेवं वक्तुं धृष्णुमो यद्याज्ञवल्क्यस्मृतिसंमतोऽयं विद्याधनाविभागो न्यायालयस्थैः पण्डितैर्मिताक्षरानुरोधादेतावता कालेन भिन्नव्यवहारः कृतः । अधुना तु यथास्मृति व्यवहारः प्रचलिष्यति इत्येव न तत्र प्रत्नता । एवं बहुषु विवादपदेषु वक्तुं शक्यं तत्तद्विषये समालोचयिष्याम इति शम् ।

---

*मीमांसायां तत्तदर्थविध्युपयुक्तानि बहून्यधिकरणानि भवन्ति तैरुभयथाऽपि धर्मशास्त्रीयपक्षाः निबन्धकृद्भिः साधयितुं शक्यन्ते ।

एवं च प्रथमायां व्याख्यायाम्– अर्थः कारणं, धर्मः कार्यम् । द्वितीयस्यां धर्मः कारणमर्थः कार्यम् । इति व्याख्यातृभेदः । उभावपि मीमांसकौ । अधुना मूलस्वारस्यविरोधे दृष्टान्तः ।

याज्ञवल्क्यस्मृतौ —

| तिथि | संख्या | तिथि | संख्या |
|---|---|---|---|
| | | | |

२—११८ ॥

२—११९ ॥

दायादानां न तद्भवेत् ।
ति क्रियापदाभ्यां पृथ-
एकातिङ् वाक्यमिति च
तथापि मिताक्षरायां
स्थपदस्य विद्यया लब्ध-
स न युक्तिसहः । अत्र
नाविरोधः २ कात्यायनव-
नारदकात्यायनस्मृतिसम-
मूलस्वरसविरोधी यतो
समानार्थकं दायादानां
पदं प्रायोक्ष्यत् । किं च
धकश्च । तथाऽत्र मनौ-

—२०६

लोडनप्रमाणितमतिभिर्या-
सरादारभ्य तच्छकानन्तरं
। तथा कात्यायनस्य कालः
ततमसंवत्सरादनन्तरं षट्-
ति चोदलेखि । तेन सुस्पष्ट-
ल्क्यानन्तरजः । एवं च
कात्यायनानुसारं याज्ञवल्क्यस्मृत्यर्थः शास्त्रयुक्तिविधुरः । प्राक्तनमन्वनुसारं तु युक्तिसहः ।

ततश्चेदं सिद्धं यद्याज्ञवल्क्यमतेन निरुपधि विद्याधनमविभाज्यं, इति स्वरसतया पूर्वतनस्मृत्यनुकूलतया च सिध्यति । व्याख्यातृविज्ञानेश्वरमतेन तु पितृद्रव्याविरोधेनेत्युपाधिना सह तदविभाज्यमिति सिध्यति तच्चोक्तप्रकारेण शास्त्रयुक्तिविधुरम् । श्रीविज्ञानेश्वरैर्मिताक्षरायां प्रथमाध्यायपञ्चम-

श्लोके "एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षादिपूरणमन्यतः क्रियते। विरोधे तु विकल्पः" इति कण्ठरवेणोक्तम्।

विज्ञानेश्वरस्य स्वोक्तिविरोधः।

तद्युक्तं मीमांसकसमादरणीयत्वात्। एवं च तदुक्त्यापि निर्गच्छत्ययमर्थः। यद् यत्र साकाङ्क्षं स्मृतिवाक्यं तत्रैव स्मृत्यन्तरसमन्वयः कर्तव्यः। निराकाङ्क्षे न। विरोधे विकल्पश्च। अत्र विद्याधनविषयकस्मृतौ श्लोकस्तु न साकाङ्क्षो नाप्यस्पष्टार्थकः। तथापि केवलं स्वकालिकविद्याधनविभाज्यतापद्धतिसंसाधनार्थं कथमपि कात्यायनवचसा याज्ञवल्कीयं समन्वितमकार्षुर्विज्ञानेश्वरस्वामिनः। यत्र साकाङ्क्षं यथा —

नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम्।
न च मूत्रं पुरीषं वा नाशुची राहुतारकाः। १—१३५

साकाङ्क्षे योजना

तत्र स्मृत्यन्तरस्य मन्वादेः समुच्चय इष्टः स च तैरादृतश्च। अन्यथा सर्वपावकसूर्यदर्शनाभावः संपद्येत। याज्ञवल्क्येन हि भगवतः सूर्यस्य प्रसादाद् वेदाधिगमः संपादितः, स तद्दर्शननिषेधं कुर्यात् किम्? अत्र श्लोके न सर्वदैव सूर्यालोकननिषेधः किं तु।

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन॥ ४—३७

इति मनुस्मृतिसमन्विततया व्याख्यानमावश्यकं युक्तिसहं च। अत्र स्मृतिचन्द्रिका-जीमूतवाहनकृतदायभागादयो निबन्धा विवरणीयाः किंतु कालाभावाद्विरम्यते ततः। एवं चैतदनुसंधेयं यत्र न स्वरसविरोधो न वा व्याकरणमीमांसादिनियमक्षतिराकाङ्क्षाघटिततयार्थानुपलब्धिश्च तत्र पूर्वतनस्मृत्यन्तरसमन्वय आदरणीयो नान्यत्र। व्याख्याकृतो निबन्धकृतश्च कुतः समन्वयग्रहग्रहिला भवन्ति तत्र राजकीयं कारणं तत्तत्कालीनसमाचाराविरोधोऽथवोभयपक्षसंसाधनार्थोपयोगिमीमांसा*

जयकरविद्याधननियमः

लापनचातुरी वा प्रयोजिकेति सविस्तरं मीमांस्येत पञ्चमे व्याख्याने। अबहुतिथे काले व्यतीते विद्याधनविषये नवीनो राजनियमो मान्यवरजयकरमहोदयसंसूचनया समभूत्तत्र वयमेवं वक्तुं धृष्णुमो यद्याज्ञवल्क्यस्मृतिसंमतोऽयं विद्याधनाविभागो न्यायालयस्थैः पण्डितैर्मिताक्षरानुरोधादेतावता कालेन भिन्नव्यवहारः कृतः। अधुना तु यथास्मृति व्यवहारः प्रचलिष्यति इत्येव न तत्र प्रत्नता। एवं बहुषु विवादपदेषु वक्तुं शक्यं तत्तद्विषये समालोचयिष्याम इति शम्।

*मीमांसायां तत्तदर्थविष्युपयुक्तानि बहून्यधिकरणानि भवन्ति तैरुभयथाऽपि धर्मशास्त्रीयपक्षाः निबन्धकृद्भिः साधयितुं शक्यन्ते।

२

# द्वितीयं व्याख्यानम् ।

१ धर्मधर्मशास्त्रयोः स्वरूपम् ।

२ धर्मशास्त्रोद्गमस्तत्प्रकारश्च ।

अस्मिन् द्वितीयव्याख्याने धर्मधर्मशास्त्रयोः स्वरूपं तदुद्गमकारणं तत्संघटना बाध्यबाधकभावो धर्मव्यवहारस्वरूपनिदर्शनपूर्वकं सालक्षण्य-वैलक्षण्ये च प्रदर्श्येते ।

१ धर्मशब्दार्थः ।

धर्मशब्दस्य तत्तदर्थानां परंपरायां समालोचितायां बहवः परिस्थिति-भेदा अनुमातुं शक्यन्ते । दाशतय्यां पुरुषसूक्ते— यज्ञेन यज्ञमयजन्त देवा-स्तानि धर्माणि प्रथमान्यासन् ॥' इत्याद्यृक्षु संधारक इति विशेष्यभूतः कुत्र-चिच्च उत्थापक इति विशेषणार्थको धर्मशब्दः समुपलभ्यते । क्वचिच्च धार्मिकीः समाज्ञा बोधयाति । ततश्चैतरेयब्राह्मणे सदाचारसमूह इत्यर्थ-श्छान्दोग्ये तु आश्रमसंबन्धविशिष्टविधयः, माण्डूक्योपनिषदि* गौडपादा-चार्यकारिकासु 'उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते ॥ इति धर्मपदेन जीवस्य ग्रहणम् ।

तैत्तिरीयोपनिषदि 'धर्मं चर' इत्यत्र तथा भगवद्गीतासु "स्वधर्मे निधनं श्रेयः । परधर्मो भयावहः ।" इत्यादौ मनुस्मृतौ याज्ञवल्कीये च 'वर्णाश्रमे-तराणां नो ब्रूहि धर्मानशेषतः' इति धर्मपदेन वेदानुयायिनां विशिष्टानि कर्तव्यानीत्यर्थः । तदेतदाहृत्य मेधातिथिविज्ञानेश्वरादिभिः १ वर्णधर्मः २ आश्रमधर्मः ३ सामान्यधर्मः इत्यादयः प्रकारा उररीकृताः । एतमर्थमाहृ-त्यैव व्याख्यानमालायामस्माकं प्रवृत्तिः । अत्र धर्मशास्त्रे प्रतिपादितानाचार-व्यवहारप्रायश्चित्ताख्यान् पदार्थान् स एवार्थो व्याप्नोति । अन्ये च जैमिनि-कणादादिदर्शिता अर्थास्तल्लक्षणानि वा यथा नोपयुज्यन्ते प्रकृते धर्म-शास्त्रीयपदार्थजाते तत्परीक्षिष्यामहे ।

शास्त्रान्तरीय – लक्षणस्यासंभवः ।

प्रथमं श्रीजैमिनिमहर्षिणा दर्शितं धर्मलक्षणं मीमांसामहे । तच्चेत्थम् – चोदनालक्षणोऽर्थो धर्मः इति । वेदविहितः स्वर्गादिप्रापको यो यज्ञादिरूपः

---

* उपनिषत्सु धर्मशब्दस्याल्पीयान् प्रयोगः । प्रभूतस्तु ब्रह्मशब्दस्यैव । क्वचित्तैत्तिरीये धर्मं चरेत्यत्र सत्कर्मेत्यर्थे । तत्रैव अलूक्षा धर्मकामाः स्युः "इत्यत्रापि सत्कर्म । ततश्च मनुस्मृतौ सदाचार इत्यर्थे – 'धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।'

पदार्थः स धर्मः । अयमर्थः श्रौतसूत्रोपयुक्तः । न स्मृतिगतधर्मशास्त्रे समुपयुज्यते तेनैव व्यवहारदायभागेऽपि न तस्य प्रसरः । ततो वैशेषिकाणां लक्षणम् – यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इदं लक्षणं सापेक्ष न गोशृङ्गग्राहिकया धर्मपदार्थं बोधयति, यत्कारणं अभ्युदयनिःश्रेयससाधकोऽयमिति वेदस्मृत्यादिवचःसापेक्षत्वात् । तथैव श्रीमन्महाभारते —

ऊर्ध्ववाहुर्विरौम्येष न च कश्चिच्छृणोति मे।
धर्मादर्थश्च कामश्च स च कस्मान्न सेव्यते ॥

इति श्रीमन्महाभारतीयलक्षणलक्षितोऽपि धर्मः साकाङ्क्षः । एवं वेदविहितं धर्मः । वेदनिषिद्धमधर्मः । न हि तत्रानुमानं प्रमाणं, इति पातञ्जलभाष्यकैयटे । अयमपि श्रौतधर्मविषय एव । एवं च धर्मस्वरूपं येन मतिपथमारोहेत्तदिदं लक्षणं यत्-

श्रीमन्महाभारते- धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥

इतीदं सार्वकालिकसार्वजनीनं शिष्टादृतं च धर्मलक्षणम् । यदा यदा समाजस्य धारणं रक्षणापरपर्यायं येन संसाधयितुं शक्यते स तदानींतनो धर्मः । अत एव वैदिकधर्मे पशुमांसाभ्यवहारः स्मार्तधर्मे शूलगवादिकर्म, विविधं श्राद्धीयान्नमधुनातनधार्मिकाणां वैदिकमार्गानुयायिनां वेदानुकूलसमाचारश्च पुराणादिषु वर्तिकादाहश्च संगच्छन्ते । तत्तत्कुलाचारादयश्च धार्मिका एव । ततश्चायं निर्गलितोऽर्थः । यद्यस्मिन् काले समाजधारकं तदानींतनशिष्टसंमतं तदेव धर्मपदेन व्यवह्रियते । एतावता स्यात्कदाचित् कस्यचित् मतम् 'केनापि कथमपि वर्तितव्यमिदमेव च समाजधारकमित्युद्घोषणीयं तेन च विप्लवः स्यात् । इति । एवं वक्तुं न शक्यते । तथा तदानीं शिष्टैर्ग्रन्थादिद्वारा राजादिद्वारा च सुयोग्यं नियम्यमानत्वात् । 'शिष्टः पुनरकामात्मा' इति लक्षणलक्षितस्तेन विप्लवस्यासंभाव्यमानत्वात् ।

अधुना धर्मस्य प्रयोजका ज्ञापका वा क इति विचार्यते । श्रुतिः, स्मृतिः, सदाचारः ( अयमेव रूढिपदेन व्यवह्रियते ) आत्मप्रियम्, आत्मतुष्टिर्वा वेदशास्त्राविरोधी तर्कः । शासनाच्छास्त्रं धर्मस्य शास्त्रं धर्मशास्त्रम् । किं च शास्त्रपदनिरुक्तिः –

धर्मस्य प्रयोजकाः तत्प्रणीतं धर्मशास्त्रं च । तत्र बाध्यबाधकभावः । धर्मनिर्णयहेतवः

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन च ॥
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ इति ।

तथा च सत्कर्मप्रवृत्तिरसत्कर्मनिवृत्तिर्वा बोध्यतेऽधिकारिणां येनापौरुषेयेण पौरुषेयेण वा वचसा तच्छास्त्रमित्यङ्गीकार्यम् । धर्मशास्त्रकारकज्ञापकहेतु-विषये याज्ञवल्क्यः —

कारकहेतवः— देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥

ज्ञापकहेतवः— श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

याज्ञवल्क्यमतेन निर्णायकाः—

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः ॥

सभा वा न प्रवेष्टव्येत्यादि वाक्यं तु राजनियताधिकारिसभाविषयम् ।

मनुः —

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ २–१ ॥

धर्मप्रमाणानि —

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ २–६ ॥

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ २–१० ॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ २–१२ ॥

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ २–१३ ॥
श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ २–१४ ॥

अत्रार्थे मनुस्मृत्युक्ता उदितानुदितादिहोमद्विविधश्रुतिविषयका दृष्टान्ताः ततः परं द्वादशाध्याये —

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ १२–१०५ ॥

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ १२–१०६ ॥
तर्केण = अनुमानेन, मीमांसारूपेण वा ।

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ॥
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ १२–१०८ ॥

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १२–१०९ ॥

दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् ॥ १२–११० ॥

एवं वसिष्ठापस्तम्बादिसूत्रेषु बहवो निर्देशाः ।
आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च । म. १-१०८ ॥

एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ म. १-११० ॥

स्मृतिव्याख्याकृद्भिः पुराणानि धर्ममूलमिति मत्वा तदनुसारं व्याख्यायते । पुराणेषु विलसन्ति विविधा आख्यायिकास्ताभिः सदाचारोऽनुमातुं शक्यते । हेमाद्रिर्नारदपुराणश्लोकानुदाहरति —

वेदाः प्रतिष्ठिता देवि पुराणे नात्र संशयः ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥

इतिहासपुराणैश्च कृतोऽयं निश्चयः पुरा ।
यन्न दृष्टं हि वेदेषु तद् दृष्टं स्मृतिभिः किल ।
उभाभ्यां यत्र दृष्टं न तत्पुराणेषु गीयते ॥

सदाचारविषये प्रमाणानि —

केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥ बृहस्पतिः ।

धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ।
द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहः ॥ महाभारते

लोकसंग्रहः शिष्टाचार इति यावत् – पराशरमाधवः ।

स्मृत्याचारयोर्विरोध आचारस्य श्रेष्ठत्वम् —

वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः ।
संभाव्यवेदमूलत्वात्स्मृतीनां वेदमूलता ॥

तस्मात्कुलक्रमायातमाचारं त्वाचरेद्बुधः ।
स गरीयान् महाबाहो सर्वशास्त्रोदितादपि ॥ म. भा. ।

देशपत्तनगोष्ठेषु पुरग्रामेषु वादिनाम् ।
तेषां स्वसमयैर्धर्मः शास्त्रतोऽन्येषु तैः सह ॥ मनुः ।

देशधर्माञ्जातिधर्मान् कुलधर्मांश्च शाश्वतान् ।
पाखण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान् मनुः ॥

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥

यद्यदाचर्यते येन धर्म्यं वाधर्म्यमेव वा ।
देशस्याचरणं नित्यं चरितं तद्धि कीर्तितम् ॥ बृहस्पतिः ॥

आदौ तावद्देशधर्मो विचिन्त्यो देशे देशे या स्थितिः सैव कार्या ।
लोकद्विष्टं पण्डिता वर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात् ॥देवलः॥

सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ म. भा. ॥

आचारसंभवो धर्मो धर्मे वेदाः प्रतिष्ठिताः । म. भा. वनपर्व ॥
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ मनुः ॥

येषु देशेषु यत्तोयं धर्माचारश्च यादृशः ।
तत्र तान्नावमन्येत धर्मस्तत्रैव तादृशः ॥ देवलः ॥

अस्वर्ग्यं लोकविक्रुष्टं धर्ममप्याचरेन्न तु ॥ याज्ञवल्क्यः ॥

प्रत्यक्षावगमं धर्म्यं शास्त्रं च विविधागमम् ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ मनुः ॥

धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः ।
व्यवहारो हि बलवान् धर्मस्तेनावहीयते ।
सूक्ष्मो हि भगवान् धर्मः परोक्षो दुर्विचारणः ।
अतः प्रत्यक्षधर्मेण व्यवहारगतिं नयेत् ॥

वशं प्राप्तस्य देशस्य व्यवहारदर्शनम् —

देशजातिकुलानां च ये धर्माः प्राक् प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ॥ बृहस्पतिः ॥

देशाचारधर्माः —

यस्मिन् देशे य आचारः पारंपर्यक्रमागतः ।
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ बृहस्पतिः ।

एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ।
समयश्चापि साधूनां प्रमाणं वेदवद् भवेत् ॥ आदित्यपुराणे ॥

धर्मार्थशास्त्रविप्रतिपत्तिः ।

धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तावाह नारदः—

यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥ इति १-३९ ॥

धर्मशास्त्रयोर्विरोधे त्वाह याज्ञवल्क्यः—

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ॥ २-२१ ॥

न्यायमनालोचयतो दोषमाह बृहस्पतिः—

केवलं शास्त्रमाश्रित्य न कर्तव्यो हि निर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥ इति ।

देशाचाराद्यप्यालोचयेदित्याह बृहस्पतिः—

देशजातिकुलानां च ये धर्माः प्राक् प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ।
जनापरक्तिर्भवति बलं कोशश्च नश्यति ।

तथा च — उदूह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैरित्यादि । अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः । तत्तद्देशे प्रायश्चित्तं नास्ति अनाचारेषु । भिन्नदेशेषु तु प्रायश्चित्तं दमश्चास्ति । व्यासः—

वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यन्यैस्तज्जैरेव तु कारयेत् ॥

समालोचितेष्वेषु मनुयाज्ञवल्क्यादिवचःस्वयमेवार्थो मतिपथमारोहति यत् श्रुतिस्मृतिपुराणगतानि कर्माणि त्रिष्वप्यदृष्टानि केवलसदाचारप्राप्तानि

तत्तत्कालीनैरकामात्मभिर्धर्मकामैः शिष्टैः परिगृहीतानि तान्येव धर्मरूपेण परिगतानि।

वैदिककर्माण्येव स्मृत्यादिषु सन्तीति मतस्य विमर्शः।

यानि वेदोक्तकर्माणि तान्येव स्मृतिषु पुराणेषु सन्ति वेदानामानन्त्यादुच्छिन्नशाखत्वाच्च तेषां स्मार्तादीनि कर्माणि यथायथं वेदे सन्तीति मीमांसका वदन्ति। मन्वादयः परावरद्रष्टारः। श्रुत्यर्थं मनसा संस्मृत्य स्वस्मृतीः प्रणयन्तीत्यपि तेषां मतम्। परन्तु मन्वादय एव तत्र विसंवदन्ते। वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्' इति श्रुतिभ्यः पार्थक्येन समुच्चायक'च'कारेण च स्मृत्यादिनिर्देशात्। किं च मनुरेव—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।

ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ इति तयोः समकक्षतया मीमांसानर्हत्वं द्योतयति कारणं च तत्र दर्शयति 'ताभ्यां धर्मो हि निर्बभौ' इति। एतावतेदं राद्धान्तन्तां यायात् यत् श्रौता धर्माः श्रुतिभ्यः समधिगन्तव्याः स्मार्ताश्च स्मृतिभ्यः। ततःपरं हेमाद्रिणा संकलितान्नारदपुराणवाक्यात् 'उभाभ्यां यत्र दृष्टं न तत्पुराणेषु गीयते' इत्यादिरूपात् श्रुतिस्मृत्योरदृष्टं धर्मजातं पुराणेषु कथ्यते। अथ च 'समयश्चापि साधूनां प्रमाणं वेदवद् भवेत्। इति नारदवचसैव शिष्टाचारप्राप्ताः केचित्तत्कालीना धर्मास्तेऽपि पूर्वोक्तप्रमाणकोटिमागताः। अत्रेत्थमपि वक्तुं धृष्णुमो यत् श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थमिति संकल्पेषु गीयते धार्मिकैस्तदनयैव रीत्या स्वरसतया संगच्छते। तथा हि — श्रुतौ यत्फलमुक्तं तच्छ्रौतविधीनामेव, तथैव स्मृतौ स्मृतिगतानां, पुराणेषु पुराणोक्तानां, तेन च तत्तत्फलप्राप्त्यर्थं पार्थक्येन सर्वेषां ग्रहणम् यदि श्रुतिगतमेव स्मृतिषु पुराणेषु च तथैव प्रतिपाद्येत तर्हि श्रुत्युक्तफलप्राप्त्यर्थमित्यनेनैव तदर्थसिद्धौ श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थमिति पुनरुक्तभूतं वितथार्थकं स्यात्। किं च याजकैः स्त्रीशूद्रयजमानकर्तृककर्मसु केवलं पुराणोक्तमित्येव प्रोच्यते तेषां श्रुतिस्मृत्योरनधिकारादिति च 'तथा ब्रूम' इति जोघुष्यते। अयि विचारचातुरीचतुराः। यदि श्रौतमेव पुराणेष्वस्ति तर्हि पुराणोक्तफलप्राप्त्यर्थमिति कथनेनैव केवलेन कथं कार्यसिद्धिरिति विचार्यमाणे सिकताकूपन्यायः समापतति। अतस्त्यज्यतामयं पन्था यच्छ्रौतोक्तमेव सर्वं स्मृतिपुराणसदाचारेष्वस्तीति। मीमांसकानामयं वादः सुगृहीतश्रुतिप्रामाण्यवत् सर्वत्र स्मृतिपुराणेष्वप्रतिहतं प्रामाण्यमस्तीति बोधयितुम्। यथा मनुस्मृतौ—

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥ २-७॥

इत्यर्थवादः। यदीदं सत्यार्थकं तर्हि नैतन्मम मतमित्यादिना याज्ञवल्क्यो नाखण्डयिष्यत्।

अधुना पूर्वोक्तवचनैर्बाध्यबाधकभावं पर्यालोचयामः । श्रुतिद्वैधे उदितानुदितायुदाहरणेषु मनूक्त्यनुसारं शाखाभेदेन व्यवस्था । उभयोः समप्रामाण्यात् । स्मृतेस्तु प्रत्यक्षश्रुत्या बाधः । स्मृत्योः परस्परं विरोधे विकल्पः । सदाचारः पुराणमिति चानर्थान्तरम् । यतः पुराणभारतेषु महतामाचारा एव वर्णितास्तथैव च 'समाचारो बहूनाम्' इत्यादि द्रौपद्या बहुपतिकत्वादिविषयेषु समुपलभ्यते । कुत्रचित् पुराणवाक्यैः स्मृतीनां बाधः यथाऽऽदित्यपुराणस्थकलिवर्ज्यप्रकरणेन तत्तत्स्मृतीनां बाधः । आदित्यपुराणोक्तमेव नान्तिमम् । यतो मातुलकन्यापरिणयविषये तद्बहिर्भूते अधुना शिष्टाचारानुरोधान्माधवाचार्यादिभिर्बाधोऽङ्गीक्रियते । धर्मार्थशास्त्रयोर्विरोधे तु धर्मशास्त्रं बलवत् इति आचारप्रायश्चित्तयोः काण्डयोः । व्यवहारकाण्डे तु तत्तत्कालीनसमाचारानुरोधादर्थशास्त्रमेव बलीयः । अत एव समाचारविरोधं हेतूकृत्य विज्ञानेश्वरैः स्मृत्यर्थो विपरिवर्तितः । अत्र बहु वक्तव्यम् । ततश्च आचारश्चैव साधूनामित्येतदनन्तरं, आत्मनस्तुष्टिरेव चेति धर्मप्रयोजकं मनुना प्रादर्शि तदुपयोगः कुत्रेति मीमांसायां संप्रवृत्तायामिदं वक्तुं शक्यं यत्र श्रौतस्य स्मार्तस्य वा द्वैविध्यं तत्र येन पक्षेण स्वतुष्टिः स एव स्वीकार्यः । अथवा यत्र श्रुतौ स्मृतौ वा न किमप्युक्तं तत्रात्मसंतोषावहं परापीडाकरं च भोजनकाले जलं न पास्यामि' इत्यादि स्वीकार्यं तेन परापीडकस्य स्वसंतोषावहस्य च कर्मणो धर्मत्वनिरासः ।

श्रुतिद्वैधविचारः

रूढितत्प्रयोजकविमर्शः—

यत्र न शास्त्रवचनं तत्र रूढेरङ्गीकार इत्युच्यते । सा रूढिः केषां, सर्वतः प्रसृतानां शूद्रातिशूद्राणां किंवा ब्राह्मणानामेवाथवा केवलशास्त्रज्ञानां तेषामथवा याज्ञिकानामेव, के ते शिष्टा यदुक्ताया रूढेः प्रामाण्यं तद्वक्तव्यमित्यनुयोगे तत्तत्संशयापाकरणार्थं तत्र तत्र विज्ञानामलक्षाणां धर्मज्ञानां समयः प्रमाणमित्युत्तरम् । पूर्वोक्ताचारप्रतिपादकवाक्यजातात् । सर्वलोकादरे तस्यैव समयस्योपयोगात् इति दिक् ।

## धर्मशास्त्र-घटना

भगवता मनुना 'आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च' अ. १-१०८ श्लो० इत्यत्र धर्मात्प्राक्तनत्वं प्रत्यपादि ततः 'एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम्' सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ १-११० इति वाक्येनाचारं दृष्ट्वा धर्मनियमाः स्मृतिरूपेण प्रणीताः । अधुना स्मृतिषूपलभ्यमानं वैविध्यं तत्तत्कालीनाचारवैविध्यमूलकमिति सुविशदं प्रत्येतुं शक्य यथा च भाषाधिगतौ व्याकरणमुपयुज्यते तद्वत् तत्कालीनाचारोप-

लब्धौ धर्मशास्त्रमुपयुज्यते। एवं च श्रुतिस्मृत्यादि धर्मस्य ज्ञापकं न कारकं व्याकरणवत्। यथा व्याकरणेन न नवीनाः शब्दा उत्पाद्यन्ते किंतु लोकसिद्धानां तेषां साधुत्वं ख्याप्यते तद्वत्तत्कर्माणि तदानींतनानामाचार इत्येव स्मृतिभिर्बोध्यते न नवीनान्यनुष्ठाप्यन्ते। अत्रार्थे पतञ्जलिर्महाभाष्यकारः— सिद्धेषु लौकिकवैदिकेषु धर्मनियमार्थं व्याकरणम्। अन्यच्च तद्यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह 'कुरु घटम्' कार्यमनेन करिष्यामीति। न तद्वच्छब्दान् प्रयोक्ष्यमाणो वैयाकरणकुलं गत्वाह कुरु शब्दान् प्रयोक्ष्य इति॥ अ. १-१-१, पृष्ठ ७ Kielhorn's Edition एतावतेदं सिध्यति पूर्वं श्रौतसूत्रेभ्यः परंपरया तत्तत्कर्मविचिकित्सानिराकरणार्थं धर्मसूत्राणि प्राणीयन्त तेषां प्रणयने ब्राह्मणगता आख्यायिकाः पौराणिककथाश्च दृष्टान्तत्वेनोपयुक्ताः। यथा वैदिकसंस्कृतिलोपो न स्यात्तथा लौकिकाचाराणां वैदिकसंस्काराणां च संमिश्रणेन धर्मशास्त्रं समुदभूत्। एवमाचारप्रायश्चित्तकाण्डयोः। व्यवहारकाण्डे त्वन्यादृशी गतिः। लौकिकाचाराणां नीतिनियमानां च संमिश्रणं नाम व्यवहारकाण्डम्।

अधुना नेपालदेशेषु 'हिंदु कायदा' पदवाच्यः राजव्यवहारः समुपलभ्यते तं शुक्रनीतिं चाणक्यनीतिं च सम्यगभ्यस्य पुरुषः सम्यग्व्यवहारज्ञानवान् भवेत्। किं च पूर्वव्यवहारोऽधुनोपलभ्यमानैस्ताम्रपट्टलेखैः कदाचित् कदाचिद्व्यवहारसमये न्यायालयं प्राप्नुवद्भिस्तत्तत्कालीनव्यवहारं दर्शयद्भिर्दायपत्रैर्ज्ञातुं शक्येत। तमालम्ब्य पूर्वतनव्यवहारस्य निर्णयः कर्तव्यः। व्यवहारदृष्ट्या संस्कारेषु सूत्रधारणविवाहयोरेव माहात्म्यं तयोर्यथाक्रमं द्विजत्वद्वारा गोत्रप्रवरविपरिवृत्तिद्वारा चाग्रिमे दायभागादौ व्यवहारे प्राबल्यम्। किं च पूर्वराजपुरुषाणां विप्लवकारणानां राजकीयव्यवस्थानां च सम्यगभ्यासेनैव ज्ञातुं शक्येत तदानींतनधर्मशास्त्रम्। अत इदं वक्तुं शक्यं यज्जनसमूहो यं संमन्यते स एव राजव्यवहारः। बौद्धिकसमाजानां विचारेतिहास एव राजव्यवहारेतिहासः। एवं चैतत्सिद्धं वैदिकसंस्कृतेस्तत्तत्कालीनाचारस्य च मिश्रणेन धर्मो नाम आचारप्रायश्चित्तकाण्डे भवतः। लौकिकाचाराणां चाणक्यादिनीतिनियमानां च संकरेण राजव्यवहारो नाम व्यवहारकाण्डं भवति। अधुना मन्वादिस्मृतीनां व्यवहारकाण्डेऽनुपलभ्यमाना वारवनितानां वयद्वारा शरीरपरीक्षा चाणक्यशास्त्रे समुपलभ्यते। ततश्च चाणक्यादिनीतिशास्त्रं पार्थक्येन व्यवहारकाण्डसहकारि भवति।

अधुना धर्मस्योद्गमे १ सामान्यासिद्धिः २ विशेषसिद्धिरिति द्वयं लौकिकाचाराश्चापेक्ष्यन्ते तान् विवृणुमः। पूर्वोक्ता ब्राह्मणपुराणादिगता लौकिकाचाराः पूर्वं समालोच्य तेभ्यः सामान्यतः परपीडाभावादिकं व्यभिचारा-

भावादिकं च तत्त्वं निष्कास्यते। एवमितः परं न वर्तितव्यमिति । यथा कचोपाख्याने शुक्राचार्यकथितो मद्यपाननिषेधः। इयं सामान्यसिद्धिः ।

पूर्वोक्ताचारे समुपलभ्यमाना या विशिष्टदेशकालजा सिद्धिस्तयोपलभ्यमानं तत्तद्देशकालविशिष्टा सिद्धिर्विशेषसिद्धिः ।

विशेषसिद्धिः

एवं भारते वर्षे पूर्वकालिकानिर्णयानालोच्य व्यवहारार्थं सामान्यसिद्धिं निर्णीय व्यवहारदर्शनं तत्तद्राजभिरक्रियत । जैमिनिना वेदेभ्यः सामान्यसिद्धिर्निष्कासिता। अत एव श्रौतविषयाण्यधिकरणानि स्मार्तेऽप्युपयोजयन्ति ।

धर्मव्यवहारयोः स्वरूपम्—

अधुना धर्मव्यवहारयोः स्वरूपविवेचनं कुर्मः । धर्मांशे चाचारप्रायश्चित्तयोर्महर्षिभिः शिष्टैः प्रणीता विलसन्ति नियमाः । व्यवहारे तु राजकृताः प्राचीनव्यवहारदर्शका नियमाः । धर्मानुष्ठाने राजभीत्यपेक्षया परलोकभीतिरधिका । व्यवहारविरोधे तु राजदण्डोऽवश्यंभावी । समधिगते राजदण्डे परलोकपीडा नास्ति । एवमेव व्यभिचारादावेनसि यत्र चान्द्रायणादि प्रायश्चित्तं राजदण्डश्च विधीयते तत्रानुभूते राजदण्डे प्रायश्चित्तं नापेक्ष्यते न ग्राह्यं च तथा परलोकपीडापि नास्ति । प्रपञ्चितं चैतन्मिताक्षरादौ ।

धर्मव्यवहारयोः सालक्षण्यवैलक्षण्ये—

अधुना धर्मव्यवहारयोः सालक्षण्यवैलक्षण्ये दर्शयिष्यामः ।

सालक्षण्यम्—

१ धर्मव्यवहारावुभावप्यैहिकपारलौकिकफलसाधकौ ।

२ धर्मव्यवहारयोरुभयोरपि मूलं निश्चितं लोकाचारतः संशोध्यम् ।

३ उभयोरपि सिद्धौ द्वयोः सामान्यविशेषसिद्ध्योर्वैद्यकज्योतिष्यादिशास्त्रसमुपोद्बलकस्य चापेक्षा । विशिष्टानुमानानां चापेक्षा ।

४ तत्तत्कालिकसदाचारपरिवृत्त्योभयोरपि परिवृत्तिः । अत एव पृथक्स्मृतिनिबन्धानां प्रणयनम् ।

५ उभाभ्यामपि तात्त्विकं सत्यमन्यशास्त्रनिर्णयनिकषोपलपरीक्षितमुररीकार्यम् । अनयोस्तु स्वयं सत्यनिर्णायकत्वे प्रयोजकत्वं न।

अनयोर्वैलक्षण्यम्—

१ धर्मपरस्य स्वभावरूपोऽर्थः । स्वभावपदेन जन्मसामयिको गुण इत्यर्थो निर्गच्छति तेन धर्मे उत्पत्तिसिद्धो गुण इति जना अभिमन्वते ।

२ व्यवहारो जनैराद्रियते तत्र कारणं राजदण्डस्यापाकरणं धर्मानुष्ठानं तु पारलौकिकं दुःखमपाकर्तुम् । आत्मतुष्टये वा । तच्च निष्कामकर्मबुद्ध्या कृतं चेत् मोक्षाय परंपरया ।

३ व्यवहारपदेन रूढा लौकिका आचारास्ते पूर्वराजस्वामिकशिलापट्टादिभिर्ज्ञायन्ते । धर्मस्तु व्यावहारिकसदाचारस्य मूलभूतं तत्त्वम् । अयं तत्त्वमूलभूतो धर्मः पूज्यग्रन्थेभ्यो वेदादिभ्यो निष्कासनीयो भवति । व्यवहारस्तु विशेषतो वेदादिषु नोपलभ्यते । केवलं राजप्रेरितो लोकाचारजन्यश्च लिङ्गेन ज्ञायमानश्च ।

यदि धर्मव्यवहारयोः प्रामाण्यमपेक्ष्यते तर्हि स्वतःप्रमाणभूतेन वेदेन तत्संबन्धोऽवश्यमेव स्वीकार्यः । अत एव मीमांसकैः श्रुतिमूलत्वादेव तदविरोधादेव च स्मृत्यादीनां प्रामाण्यमादृतम् । प्राचीनानां सरणिरियं यन्महाभारतादिषु ते तांस्तान्नवीनाचारान् प्रकल्प्यापि 'एष धर्मः सनातनः' 'पूर्वैरिदमाचरितम्' इत्याद्युद्घोष्य वेदमूलकत्वं सर्वेषां प्रस्थापयन्ति । तेन वेदगतप्रामाण्यस्याप्रतिहतं प्रसरः सर्वत्राग्रिमग्रन्थेषु प्राचीनग्रन्थकृतः प्रत्नाचारादिकं सर्वं मूलत एव निर्गतमिति वदन्ति । कदाचिदर्थान्तरमप्यङ्गीकुर्वन्ति ।

पूर्वमीमांसकैरेवं वेदादिगतं प्रामाण्यं पुराणेषु सदाचारादिषु मुक्तकण्ठमाद्रियते तदविरोधित्वेन हेतुना । एवं च यथान्यत्र तथा प्रामाण्यविषयेऽप्युत्तरमीमांसकैः *पूर्वमीमांसकमतमनुक्रियते । किं बहुना प्राच्यां मीमांसायां म्लेच्छशब्दानामपि वेदार्थकरणे साहाय्यमालम्बितमार्यशब्दार्थपरित्यागपुरःसरमिति प्रथमाध्यायस्थम्लेच्छाधिकरणसमालोचयितॄणां नापरिचितमिति । किंच 'कृते तु मानवा धर्माः' इति यदि सार्थतया जनैराद्रियेत तर्हि नातिचिरं जायमानेन निर्णयसिन्धुप्रणेत्रा मन्वादिस्मृतिनिर्देशः प्रामाण्येन नाद्रियेत किं चायं श्लोकः पराशरस्यैव न मन्वादेरिति ।

---

*स्मृतिप्रामाण्यबोधकानि जैमिनिसूत्राणि—

अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् १-३-२

विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् १-३-३

हेतुदर्शनाच्च १-३-४

## तृतीयं व्याख्यानम् ।

१ धर्मशास्त्रावान्तरभेदाः ।

२ धर्मशास्त्रस्थविशिष्टग्रन्थानां परिचयः ।

द्वितीयव्याख्याने धर्मशास्त्रेतिपदान्तर्गतधर्मपदार्थस्य स्वरूपं तथा धर्मशास्त्रस्य च स्वरूपं समालोच्य तदुद्गमे बीजं तत्तत्कालिकं सदाचारं प्रतिपाद्य तत्संघटनां निर्णीय धर्मव्यवहारस्वरूपनिर्देशपूर्वकं तयोर्धर्मव्यवहारयोः सालक्षण्यवैलक्षण्ये व्यवृणवम् । अधुना धर्मशास्त्रमिति व्यवह्रियमाण ग्रन्थजातं विवृणोमि । तत्र त्रयोऽवान्तरभेदाः । आचारो व्यवहारः प्रायश्चित्तं चेति । तत्राचारप्रायश्चित्तौ परलोकफलसंबन्धत्वान्मुनिभिः प्रणीतौ व्यवहारस्त्वैहिकफलप्रदत्वादिह लोकस्थव्यवस्थाकारिणा राज्ञा प्रणीत इति वक्तुं शक्यते । अयि विद्वांसः सकलमिदं ग्रन्थजातं सार्धद्विसहस्रेण हायनानां पूर्तिमगात् ।

### ग्रन्थत्रैविध्यम् ।

एतस्य च त्रैविध्यं स्थूलतया प्रतिपादयितुं शक्यम् । प्रथमं धर्मसूत्राणां प्रणयनमथ च स्मृतीनां तदनन्तरं व्याख्यानिबन्धानाम् । कानिचिद्धर्मसूत्राणि मनोः प्राक्तनानि । कानिचिच्च तदुत्तरकालजानि । धर्मसूत्रकृद्भिः स्मृतिप्रणेतृभिश्च "धर्मो धारयते प्रजाः । यस्स्याद्धारणसंयुक्तं स धर्म इति कीर्तितः" इति महाभारतवचोऽनुसारं समाजभव्यं पुरस्कृत्य निखिलं धर्मजातमुपादिशि । अत एव तान्युभयाविधानि ग्रन्थजातानि जनानां संमानभाजनमभवन् । धर्मसूत्रस्मृतयश्च भिन्नशाखां तन्निवासदेशं च लक्ष्यीकृत्य प्रणीतत्वात्तत्तच्छाखीयैस्तत्तज्जनपदवासिभिश्च संमान्यन्ते स्म । तदानीं सर्वग्रन्थस्य समन्वयः कर्तव्य इति वार्तापि नासीत् । निखिलस्य धर्मस्य धर्मांशस्य वा मन्वादयः समनुगन्तव्याः प्रष्टव्याश्च संशीतिविषये । एतच्च 'मनुमेकाग्रमासीनम्' 'योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन्,' व्यासश्च निखिलस्मृतिजातं स्मरन्नपि तत्काले तद्धर्मेण स्वीयं कार्यमपारयन् नवीनधर्मजातमपृच्छदिति 'श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा' इत्यादि 'श्रुता ह्येते भवत्प्रोक्ताः श्रुत्यर्था मे न विस्मृताः । अस्मिन्मन्वन्तरे धर्माः कृतत्रेतादिके युगे । सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे । चातुर्वर्ण्यसमाचारं किंचित् साधारणं वद ॥' इति प्रथमाध्याये पराशरस्मृतौ १६ श्लोकपर्यन्तम् । एवं च प्रश्नप्रतिप्रश्नाभ्यां पूर्वोक्तस्मृत्युपक्रमगता-

भ्यामेवं प्रत्येतुं शक्यं यत् मनुयाज्ञवल्क्याभ्यां वर्णानामान्तरप्रभवाणां च धर्माः कथिताः पराशरेण तु चातुर्वर्ण्यस्य समाचारात्मकं किंचित्साधारणं धर्मजातं कथितं तथैव प्रश्नोपक्षेपात् । पूर्वमुक्तं यत् त्रिविधं ग्रन्थस्वरूपं तन्मध्ये धर्मसूत्रे स्मृतिषु चैकवाक्यता न दृश्यते । सूत्रेषु केचित् आचार्या इति निर्देशः केवलं मतान्तरस्य । निबन्धेषु व्याख्याग्रन्थेषु च सा सर्वत्रैव बहुशो दृश्यते । तत्र चैकवाक्यतायां स्वाभिमतसिद्ध्यर्थं पूर्वमीमांसाधिकरणानि समुपयोजितानि । दृश्यते चातीव बुद्धिकौशलं व्याख्यातॄणां निबन्धकृतां च भेदप्रभेदप्रणयने । किंतु यथा धर्मसूत्रस्मृतिषु समाजधारणबुद्धिस्तथा व्याख्यानिबन्धेषु न संदृश्यते केवलं पूर्वनिबन्धखण्डने बद्धपरिकरत्वमनुभूयते । एतच्च सविस्तरं सनिदानं पञ्चमे व्याख्याने समालोचयिष्यामः ।

‘अथातः सामयाचारिकाः’ इति समयाचारस्वरूपं वर्णनीयम् ।

अधुना धर्मसूत्रग्रन्थपरिचयपूर्वकं तत्पौर्वापर्यं विविच्यते । धर्मसूत्राणि तत्तच्छाखीयसामयाचारिकसिद्ध्यर्थं महर्षिभिः प्रणीतानि । एतानि च गुरुशिष्यविवादपूर्वकं सिद्धान्तसूत्ररूपेण निरमीयन्तेत्यादि प्रथमव्याख्याने कथितम् । अधुनोपलभ्यमानानि धर्मसूत्राणि कृष्णयजुर्वेदीयतैत्तिरीयशाखीयानि आपस्तम्बबोधायनादीनि । गौतमसूत्रं तु सामवेदगतराणायनीयशाखागतं शङ्खलिखितधर्मसूत्रं शुक्लयजुर्वेदगतशाखानुसारि । गौतमवासिष्ठविष्णुधर्मसूत्रैरेवमनुमातुं शक्यं यदाचारव्यवहारप्रायश्चित्तेति काण्डत्रयं तत्रासीत् । मनुयाज्ञवल्क्यादिस्मृतिषु विद्यमाना दायभागादिसर्वव्यवहारपदार्थास्तत्र समुपलभ्यन्ते । धर्मसूत्रप्रणयनकालः क्रिस्तशकात्प्राक्षट्शतमारभ्य तदनन्तरं द्विशतपर्यन्तमिति वक्तुं शक्यम् । स्मृतिः तत्तच्छाखागतधर्मसूत्रस्य द्वितीयं रूपमिति वक्तुं शक्यमेवं च कृष्णयजुर्वेदीयमानवसूत्रमनुरुध्य मनुस्मृतिः प्राणीयतेति बहूनां विदुषां मतम् । ततश्च मानवसूत्रं मनुस्मृतिप्राक्कालिकं, ततोऽन्यानि तदनन्तरजानि । शङ्खलिखितधर्मसूत्राच्छङ्खलिखितस्मृतिः प्रादुरभूदिति यथा नामसादृश्याद्वक्तुं शक्यमेवं सर्वासु किं बीजं स्यादिति विचार्यमाणे प्रत्यक्षं प्रमाणं यद्यपि न वक्तुं शक्यं तथापि श्राद्धवैश्वदेवादिषु येषां मन्त्राणां विनियोगस्तत्तत्स्मृतिषु आदृतस्तादृशो यत्र गृह्यसूत्रेऽधुनोपलभ्यते तच्छाखीयधर्मसूत्रानुसारिणी सा स्मृतिरिति वक्तुं शक्यम् । गृह्यसूत्रं श्रौतसूत्रवत्तत्तच्छाखीयैः कण्ठे क्रियत एव । सूत्राणां पौर्वापर्ये चेदं वक्तुं शक्यं यद् बौधायनसूत्रं प्राचीनं ततः प्राक्तनं मानवं ततः प्राक्तनमापस्तम्बं ततोऽपि प्राक्तनं गौतमं, वसिष्ठस्य सत्याषाढस्य च सूत्रमापस्तम्बसूत्रानन्तरजन्यं, विष्णुसूत्रं कठशाखीयम् ।

धर्मसूत्रेषु विशेषतः सदाचारः, व्यवहारः, शिष्टाचार इत्यादि बोध्यते। क्वचित् क्वचित् गृह्यसूत्रेषु धर्मसूत्राणां निर्देशोऽस्ति।

सूत्रस्मृतीनां सालक्षण्यवैलक्षण्यविषये—

१ सूत्राणि गद्यरूपेण, स्मृतयस्तु प्रायेण पद्यरूपेण प्रणीतानि।

२ धर्मसूत्राणि पुरातनभाषामयानि स्मृतयस्तु नवीनभाषाघटिताः।

३ धर्मसूत्राण्यव्यवस्थितानि स्मृतयश्च व्यवस्थितप्रकरणघटिताः।

४ तत्तच्छाखीयधर्मसूत्रेषु तत्तद्वेदमन्त्राणां निर्देशस्तथैव स्मृतिष्वपि।

अधुना विशेषतो ग्रन्थविषयवर्णनं समुपक्रम्यते—

१ गौतमधर्मसूत्रम्।

उपलभ्यमानेषु सर्वेषु धर्मसूत्रेषु प्राचीनतममेतद् धर्मसूत्रम्। सामवेदराणायनीयशाखासंबन्धि। अत्र सामवेदगता मन्त्रा उद्धृताः। गौतमेन स्वयं धृता विधयोऽत्र विलसन्ति। अत्र प्रकरणानामष्टाविंशतिः। अस्य गद्यग्रन्थस्य भाषा पाणिनिसूत्रपरिपूता। पाठभेदेषु हरदत्तेन टीकाकृता संगृहीताः पाठा एव संमानिताः। गौतमनाम्ना निर्दिष्टानि मिताक्षराद्युद्धृतवचनानि बहूनि सांप्रतमुपलभ्यमाने गौतमसूत्रे न सन्ति। काश्चन वैदिकसंहिताः सामविधानादि ब्राह्मणानि उपनिषदः वेदाङ्गानि पुराणानि च तत्र निरदेक्ष्यन्त गौतमसूत्रेषु निर्दिष्टेनाचार्या इति पदेन कस्य ग्रहणं तद्वक्तुं न शक्यते। गौतमोक्तमेकोनविंशत्यध्यायस्थं वृत्तं बौधायनेन संगृह्यते। वसिष्ठोऽपि तत् स्वीये द्वाविंशेऽध्यायेऽनुवदति। गौतमस्य वसिष्ठस्य च बहूनि सूत्राणि समानानुपूर्विकाणि। गौतमेन यवननिर्देशः कृतस्तेनायं क्रिस्तशकानुसारं षट्शतमितसंवत्सरादनन्तरं द्विशतसंवत्सरपर्यन्ते समये समभूदिति प्रतीयते। अस्य गौतमस्य निर्देशो याज्ञवल्क्यस्मृतौ भविष्यपुराणे शंकराचार्यग्रन्थे मेधातिथिग्रन्थे चास्ति। अत्र सूत्रे हरदत्तमस्करिणोर्व्याख्या। तथाऽसहायस्यापि तत्र व्याख्या विलसति।

२ बौधायनसूत्रम्।

अयं बौधायनः कृष्णयजुर्वेदगततैत्तिरीयशाखीयोऽपि सर्वैः शाखिभिः संमान्यते। दाक्षिणात्योऽयं क्रिस्तोत्तरद्वितीयशतके जन्म लेभे।

३ आपस्तम्बसूत्रम्।

अयमापस्तम्बोऽपि दाक्षिणात्यस्तैत्तिरीयशाखीय एव। तस्य सूत्राणि विशेषतो वैदिकभाषानुपूर्वीकत्वात्तत्कालः प्राचीनतम इति प्रत्याययन्ति। स नियोगपैशाचविवाहादिविषये बहु साटोपं वदति।

अस्य च कालः क्रिस्तप्रथमशतकम् ।

४ वसिष्ठसूत्रम् ।

अयमपि वसिष्ठो दाक्षिणात्यस्तैत्तिरीय एव । बौधायनापस्तम्बवसिष्ठ-सूत्राणि त्रीण्यपि बहुशः समानानुपूर्विकाणि। अस्य कालो वक्तुं न शक्यते ।

अत्रैव बहूनां धर्मसूत्राणां तत्कृतां च केवलं नामनिर्देशं कुर्मः ।

| | | |
|---|---|---|
| १ हिरण्यकेशी | २ विष्णुः | ३ हारीतः |
| ४ शङ्खलिखितौ | ५ मानवम् | ६ कौटिलीयम् |
| ७ वैखानसः | ८ अत्रिः | ९ उशनाः |
| १० कण्वः काण्वो वा | ११ कश्यपः काश्यपो वा | १२ गार्ग्यः |
| १३ च्यवनः | १४ जातूकर्ण्यः | |

५ देवलधर्मसूत्रम् ।

कदाचिद् देवलसूत्रमासीदिति प्रतीयते । यतो मिताक्षरादिष्वाचार-व्यवहारप्रायश्चित्तेति त्रिष्वपि काण्डेषु देवलवचांसि प्रमाणत्वेनोदाह्रियन्ते । अधुनोपलभ्यमानमानन्दाश्रममुद्रितं स्मृत्यात्मकं भिन्नम् । यतस्तत्र केवलं श्लोकानां नवतिरेवोपलभ्यते तत्र च म्लेच्छसंसर्गप्रायश्चित्तमेव प्रतिपाद्यते । तद्गता एव केचन श्लोकाः ( १७-२२ ) अपरार्केण आपस्तम्बीयत्वेन गृहीताः । ( ३०-११ ) इति द्वौ मिताक्षरापरार्काभ्यां विष्णुनाम्नैव निर्दिष्टौ । अपत्यकर्मविद्योति ज्योतिस्त्रयं देवलो वदतीति श्रीमन्महाभारते । नीति-ग्रन्थस्य प्रणेता देवलः कात्यायनबृहस्पतिसमकालिक आसीदिति प्रतीयते । अधुना स्मृतिविषये किंचिन्निदश्यते ।

स्मृतिसंख्या ।

स्मृतिपदेन वेदातिरिक्ता ग्रन्था ग्राह्याः । पाणिनिश्रौतसूत्रमहाभारता-दयः श्रीशंकराचार्यैः स्मृतित्वेन व्यपदिश्यन्ते । तथा च पाणिनिस्मृतिरिति । मन्वादिग्रन्थाः स्मृतयः । धर्मशास्त्रं तु वै स्मृतिः । इति मनूक्त्या धर्मशास्त्रस्यैव स्मृतिरिति संज्ञा । याज्ञवल्कीये विंशतिः स्मृतयः, पराशरीये एकोनविंशतिः, तन्त्रवार्तिके अष्टादश धर्मसंहिताः कथ्यन्ते । अपरार्केण षट्त्रिंशत् (६३) स्मृतयः कथिताः । वृद्धगौतमेन सप्तपञ्चाशत् । वीरमित्रो-दये अष्टादश स्मृतयः, अष्टादश उपस्मृतयः, एकविंशतिरन्यादृश्यः। निर्णय-सिन्धुमयूखाद्युद्धृताः स्मृतयः शतसंख्याका भवेयुः। कुत्रचित् स्मृतीनां संख्या पञ्चत्रिंशदुत्तरशतपरिगणिताऽस्ति । तत्र काश्चन गद्यपद्यात्मिकाः, काश्चन केवलं गद्यात्मिकाः परं ता अल्पीयस्यः । पद्यात्मिकास्तु प्रभूताः । तत्र समाननामत्वेऽपि लघुबृहद्वृद्धेतिविशेषणविशिष्टाः काश्चित् स्मृतयः

सन्ति। तत्र याज्ञवल्क्यबृहद्याज्ञवल्क्येत्यादौ भूयान् भेदो विषयेषु प्रकरणेषु च। तथापि हारीतशातातपात्रीतिनिर्दिष्टं स्मृतित्रयं लघुबृहद्वृद्धेतिविशेषणविलसितं समानार्थकमेव केवलं संक्षेपविस्तारविशिष्टं लघुबृहदिति विशेषणानुकूलरचनात्मकम्। वृद्धेतिविशेषणसमय एवमपि वक्तुं शक्यं यदियं स्मृतिस्तत्तत्पण्डितैर्भिन्नकालजैर्वृद्धिं प्रापितेति। काश्चन हारीतादिस्मृतयो वैष्णवादिमतप्रतिपादिन्यो मतान्तरनिन्दावहाश्च दृश्यन्ते। अत्रोदाहरणं वृद्धहारीतस्मृतिः। अत्र प्रायश्चित्तमाचारश्चांशतः प्रतिपाद्यतेऽङ्कनादिरूपो, व्यवहारस्य तु नामापि न श्रूयते। अत्र सूत्रोपनिषत्प्रतिपादितभस्मधारणं निन्द्यते तद्धारकाश्च चाण्डालत्वेन निन्द्यन्ते। तेनैतासां प्रामाण्ये भवति विसंवादः सुज्ञानाम्। किं च यथोपनिषत्सु तथा स्मृतिषु त्र्यवयवकत्वं विलसति। तथा हि—

स्मृतीनां त्र्यवयवकत्वम्।

१ आख्यायिका २ तत्त्वज्ञानम् ३ उपासनाश्चेति त्रयं यासूपनिषत्सु ता महोपनिषदः। यत्र केवलमंशद्वयमेकोंऽशश्च तत्रेशावास्यादिषु लघूपनिषत्त्वं, तथैवाचारव्यवहारप्रायश्चित्तेति काण्डत्रयं यत्र ता महास्मृतयः, १ मनुस्मृतिः २ याज्ञवल्क्यस्मृतिः, ३ पराशरस्मृतिश्चेति। तत्र च विद्यतेंऽशत्रयम्। आचारव्यवहारप्रायश्चित्तान्तर्गतमंशद्वयमेको वा यत्र विद्यते देवलादिस्मृतिषु ता लघुस्मृतयः। एता लघुस्मृतय एव बहुसंख्याकाः। लघुस्मृतयो व्याख्याविशिष्टा न भवन्ति। महास्मृतयस्तु प्रभूतव्याख्यायुताः। तत्र, मनुस्मृतौ व्याख्याष्टकं, याज्ञवल्क्यस्मृतौ च त्रिचतुरा व्याख्याः पराशरस्मृतावुपबृंहणरूपं माधवीयं भाष्यम्। एवं चैता महास्मृतीर्यथाक्रमं विवृणुमः। एतासां स्मृतीनां पद्येषु पाठभेदा दरीदृश्यन्ते। तत्र कारणं व्याख्याकृतो निबन्धकृतश्च स्मरणेनैव निबन्धान्तरपुस्तकं च दृष्ट्वा तत्तत्स्मृतिवाक्यानि लिखन्ति। न स्मृतिपुस्तकमालोचयन्ति।

मनुस्मृतिः— 'यन्मनुरवदत् तद्भेषजम्' इति तैत्तिरीयब्राह्मणप्रथितमाहात्म्यो मनुः ( मनावी धाय्ये इति तैत्तिरीयब्राह्मणम्। ) क्रिस्तजन्मनः प्राक् द्वादशशतमारभ्य द्विशतपर्यन्तं कस्मिंश्चित् काले प्रादुरभूदिति बहूनां पण्डितानां व्युलरादीनां मतम्। स च मनुष्याणां जनक इत्यृग्वेदादिषु। शातपथब्राह्मणे च मनु-जलप्रलययोराख्यायिका। निरुक्ते दायभागप्रणेतृत्वेन मनोर्निर्देशः। तथैव गौतमीये महाभारत आपस्तम्बीये च। नारदस्मृतावुपोद्घाते लक्षश्लोकात्मकं धर्मशास्त्रं मनुना प्रणीतं तच्च नारदाय प्रादायीति कथितम्। एवमेवार्थवादो भविष्यपुराणे मनुविषयकः। मानवगृह्यसूत्रमनुप्राणीयत मनुस्मृतिरिति मते कैश्चिद्विवादः संभाव्यते। यतो

मानवगृह्यसूत्रे विनायकशान्तिः, वधूपरीक्षा च प्रोच्यते न ते मनुस्मृतावुच्येते इति । अत्रेदं ध्येयं मानवधर्मसूत्रमनुप्राणीयत मनुस्मृतिर्न मानवगृह्यमनु इत्यस्ति वादः । महाभारते मनुद्वयं वर्णितम् । एकश्च स्वायंभुवो मनुः प्रणेता धर्मशास्त्रस्य । अपरस्तु प्राचेतसो मनुरर्थशास्त्रस्य । अधुनोपलभ्यमाने मनुस्मृतिपुस्तके धर्मशास्त्रार्थशास्त्रेति द्वयमप्युपलभ्यते । प्रसक्तानुप्रसक्त्येदमपि वक्तुं शक्यं यद् अधुनोपलभ्यमाने मनुस्मृतिग्रन्थे संस्करणत्रयमस्ति यतस्तत्र तत्र परस्परविरुद्धानि नियोगशूद्रभार्याविवाहादिबोधकनिषेधकानि भूयांसि वचांसि दृश्यन्ते । तत्र द्वितीयं तृतीयं वा संस्करणं याज्ञवल्क्यस्मृत्यनन्तरजमिति उभयस्मृत्योः पर्यालोचयितॄणां मतिपथमारोहेत् । सामान्यतो मनोः श्लोकाः सरलार्थकाः पाणिनीयव्याकरणानुसृताश्च दृश्यन्ते । अधुनोपलभ्यमानमनुस्मृतिपुस्तके मुद्रितेभ्यः श्लोकेभ्यो बहिर्भूताः स्मृत्यन्तरव्याख्यानिबन्धादिधृता मनुनामनिर्दिष्टा प्रभूताः श्लोकाः सन्ति येषां परिगणनं ग्रन्थशरीराद् बहिर्गुजरातप्रिंटिंगमुद्रितपुस्तके कृतम् । अन्यच्च बृहन्मनुर्वृद्धमनुरिति नाम्ना निर्दिष्टं मनुद्वयमस्ति तत्प्रथितान्मनोः पश्चात्तनमित्येवाङ्गीकार्यम् । मनुर्मौर्यसमये समुद्भूत् ।

याज्ञवल्क्यः

वैदिकमहर्षिषु याज्ञवल्क्यस्य नाम प्रथिततमम् । शतपथे याज्ञवल्क्यजनकसंवादः प्रसिद्धः । बृहदारण्यकेऽयं मैत्रेय्यादिसंवादेऽध्यात्मवित्तम इति श्रूयते । याज्ञवल्क्यस्मृत्यन्तिमश्लोकैस्तेनैव महर्षिणाऽऽरण्यकं योगशास्त्रं च प्रणीतमिति कथितम् । नवमशतके प्रादुर्भवताऽग्निपुराणेन नवशतात्मकाः श्लोका याज्ञवल्क्यकृता इति परिगणितम् । विश्वरूपमिताक्षरापरार्कव्याख्यानां मूलश्लोकविषये महान् विसंवादः सोऽपि प्रायश्चित्तकाण्ड एव भूयान् । अस्याः स्मृतेः प्रणयनकालः क्रिस्तप्रथमशतकादारभ्य तृतीयशतकपर्यन्तं कदाचित् । अस्य च स्मृतिः सर्वमान्या । अयं च शातवाहनकालिकः । व्यवहारदायभागे मनुयाज्ञवल्क्ययोर्भूयान् भेदः । स च सालक्षण्यवैलक्षण्यप्रघट्टके दर्शयिष्यामः ।

मनुयाज्ञवल्क्ययोः सालक्षण्यवैलक्षण्ये ।

प्रथमसंस्करणात्मकस्य मनुग्रन्थस्यायं याज्ञवल्क्यस्मृतिरूपः सुयोग्यः संक्षेप इत्युभयस्मृतिविदां मतम् । व्यवहारे तु राजपद्धत्यनुसारं भेदः ।

१ याज्ञवल्क्यस्मृतौ विनायकशान्तिः, गृहशान्तिः, दिव्यानि च । तथा मनौ नास्ति । इदं कदाचिद्याज्ञवल्कीयेऽपि प्रक्षिप्तं स्यात् ।

२ जगदुत्पत्तिर्मनौ विद्यते याज्ञवल्कीये न । मनौ द्वितीयसंस्करणजन्येयम् ।

३ विष्णुधर्मसूत्रं याज्ञवल्कीयं तथा कौटिलीयमर्थशास्त्रं याज्ञवल्कीयं च समानम् । अत एव मनुयाज्ञवल्क्ययोर्व्यवहारे भेदः ।

४ मनुः शूद्रस्त्रीपरिणयमनुमनुते, याज्ञवल्क्यः श्रुतिप्रमाणमादृत्य निषेधति तम् ।

५ नियोगनिन्दा मनौ ( कदाचित् द्वितीयसंस्करणे ) समुपलभ्यते याज्ञवल्कीये च नियोगस्य विधिः । एवमेव द्यूतादावपि गतिः ।

६ मनुर्दायविषये स्त्रियो निषेधति याज्ञवल्क्यस्तु पितुर्भर्तुश्च धनं स्त्री लभेतेत्यनुमनुते । दायविषये याज्ञवल्क्यमतेन स्त्रियोऽधिक्रियन्ते किंतु मिताक्षरादयस्तन्नैवाद्रियन्ते तथैव न्यायालयाः ।

७ पुत्रदायविषये तत्तत्पुत्रदृष्ट्या मनुयाज्ञवल्क्ययोर्मतभेदः ।

८ कौटिल्यानन्तरजस्य याज्ञवल्क्यस्य विभक्तभ्रातृस्त्रीदायविषये मनुना सह विप्रतिपत्तिः । एतत्सविस्तरं स्त्रीधनविषये ब्रूमः ।

९ मन्वादयः सर्वे द्वादशसु पुत्रेषु बन्धुदायादा अबन्धुदायादाश्चेति विभज्य दायं व्यवहरन्ति । याज्ञवल्क्यस्तु सर्वत्र सममेव व्यवहरति ।

१० मातरि मृतायां बन्धवो भगिन्यश्च समांशका इति मानवं कौटिलीयं च मतम् । याज्ञवल्क्यस्य तत्र विप्रतिपत्तिः । स्त्रीणां कन्यादीनां दायविषये याज्ञवल्क्यस्य विशेषतः पक्षपातः ।

११ मनुः ( ९-२१५ ) न पुत्रभागं विषमं दद्यादित्याह । याज्ञवल्क्यस्त्वत्र स्त्रीविभागेन दायो विभजनीय इति ।

अन्यदपि प्रभूतं तारतम्यमस्ति तत् प्रतिप्रकरणं विचारे समालोचयिष्यामः । अनयोरेव स्मृत्योर्विशेषतस्तारतम्यं परीक्षणीयं न पराशरस्मृतेः । यतस्तत्राल्पीयान् व्यवहारो विवृतः । विस्तृतस्त्वनयोरेव स्मृत्योर्विशेषेण । पराशरीये आचारप्रायश्चित्तविषय एव बहु पराक्रान्तं न व्यवहारे । स्मृत्यन्तरेषु संक्षिप्ततयैव वर्णनम् ।

पराशरः—अयं प्राचीनतमस्तैत्तिरीयारण्यके बृहदारण्यके निरुक्ते च वर्ण्यमानो महर्षिः स्मृतिमिमां प्राणिन्ये । पराशरेणाल्पीयान् व्यवहारो वर्णितः । सोऽपि च राजविषयक एव । तेन चत्वारः पुत्राः १ औरसाः २ क्षेत्रजाः ३ दत्तकाः ४ कृत्रिमाः इति वर्णिता अन्ये तु न निषिद्धाः । तत्र 'नष्टे मृते प्रव्रजिते' इत्यादि प्रथितं स्त्रीणां पुनर्विवाहस्य विधायकं वाक्यं दृश्यते । तदग्रे अनुगमनस्य ( देशभाषया सतीगमनस्य ) स्तुतिः कृता । पराशरो मनुमतमनुवदति । कुत्रचिदेतयोः समानाक्षराः श्लोकाः सन्ति ।

अस्यावतारकालः— क्रिस्तजन्मनोऽनन्तरं प्रथमशतात् पञ्चमशतक-

पर्यन्तम् । बृहत्पराशरः कश्चिदेतदनन्तरजः स्मृतिकृत् । कलियुग उपयुज्यमाना पराशरस्मृतिः ।

नारदः— त्रिकाण्डभूषितास्यापि स्मृतिः । अस्य जन्म क्रिस्तोद्भवादनन्तरं पञ्चमं षष्ठं वा शतकम् । अस्यां स्मृतावसहायस्य व्याख्या । एतदनन्तरं बृहस्पति, कात्यायन, अङ्गिरस, ऋष्यशृङ्ग कार्ष्णाजिनि प्रभृतीनां शतसंख्याकानां महर्षीणां स्मृतयः । परं ता विस्तरभयान्न वर्ण्यन्ते ।

अधुना व्याख्याकृतां निबन्धानां च कालक्रमेण वर्णनम् । असहायस्य व्याख्या नारदस्मृतावित्यनुपदमेवोक्तम् । भर्तृयज्ञो नाम भाष्यकारः । शंकराचार्यैर्बृहदारण्यकभाष्येऽस्य निर्देशः कृतः । तथैव तस्य पारस्करगृह्यसूत्रे गौतमधर्मसूत्रे च व्याख्या ।

व्याख्यानिबन्धाश्च ।

विश्वरूपः— अस्य च याज्ञवल्क्यस्मृतौ बालक्रीडाख्या व्याख्या । यदि सुरेश्वर एवायं यथा केचन मन्वते तर्ह्यस्य समयः क्रिस्ताष्टमशतकम् । वस्तुतस्तु विश्वरूपोऽयं भिन्नः ।

भारुचिः—तत्त्वज्ञो भारुचिरयं च समान एवेति भाति । बहुषु स्थलेष्वनेन सह विज्ञानेश्वरस्य विमतिः ।

श्रीकरः—अयं मैथिलो भवितुमर्हति । ( ८००-१०५० ) कालः ।

मेधातिथिः-दाक्षिणात्य इति केचित् । अयमौत्तराहः प्रायः काश्मीराभिजनः । अयं प्राच्यां मीमांसायां प्रवीणः । यत्र तत्र विध्यर्थवादमीमांसामारचयति । विस्तरशः संन्यासपदेन अहंकारत्याग इत्येवार्थः कर्मत्यागरूपोऽर्थो न ग्राह्यः । क्षत्रियजोऽपि बालो ब्राह्मणेन पुत्रीकर्तुं शक्यत इति च तन्मतम् । नष्टे मृते इत्यत्र पतिशब्दः पालकरूपमर्थं ब्रूते इति प्रतिपादयति । अस्य समयः क्रिस्ताब्द (८२५-९०० )

धारेश्वरभोजदेवः— धाराधिपेनानेन भोजदेवेन काव्यालंकारज्योतिषयोगादिशास्त्रेषु ग्रन्थाः प्राणीयन्त । अनेन सह क्वचित् विज्ञानेश्वरो विरुध्यते । धर्मप्रदीपस्तु केनचिदन्येन भारमल्लसुतेन भोजेन प्रणीतः ।

देवस्वामीः— (१०००-१०५० )

अथ जितेन्द्रियबालकबालरूपयोगेश्वराश्च ।

विज्ञानेश्वरः-अयं दाक्षिणात्यः कल्याणपुरनिवासी विक्रमार्कसमयजश्च महामान्यो व्याख्याकृत् नैकमप्यक्षरं स्मृत्यवलम्बं विना कथयति । तथापि मूलेन सह स्मृत्यन्तरालम्बाद् विरुध्यते यथायं राजकीयन्यायालयेषु महामान्यो न तथा स्वयं स्मृतिकृत् । तत् प्रसङ्गानुसारं विवरिष्यामः। सपिण्डपदार्थं समानः पिण्डो देहारम्भकत्वेनेत्यादिरूपमर्थं स्वीकृत्य रक्तसाम्यानुसारं दायविभागमनुमनुते । दाये सप्रतिबन्धो दायोऽप्रतिबन्धो दायश्चेति विभागद्वयम् । सर्वेषु पदेषु जीमूतवाहनेन सहास्य विप्रतिपत्तिः । अत्र

टीकात्रयम् । विश्वेश्वरः, नन्दपण्डितः बालंभट्टश्च । अस्य कालः । १०७० ११०० । अन्ये कामधेनु, हलायुध, भादेवभट्ट, प्रकाश, पारिजाताः । गोविन्दराजः कुल्लूकेनोद्धृतः । कल्पतरुः, लक्ष्मीधरः । जीमूतवाहनो वङ्गदेशीयो विज्ञानेश्वरस्य बहुशो विरोधी । अधुना न्यायालयस्थैर्दायभागो वङ्गेषु, मिताक्षरा महाराष्ट्रादिषु सर्वत्र संमान्यते ।

अपरार्कः—याज्ञवल्क्यस्मृतिव्याख्याता ।

स्मृतिचन्द्रिका—अस्याः कर्ता दाक्षिणात्यो देवण्णभट्टः । विज्ञानेश्वरमतीव संमनुते । तथापि कुत्रचिद्विरुध्यते ।

हरदत्तः—दाक्षिणात्यः ।

हेमाद्रिः—दाक्षिणात्यः अस्य पुरुषार्थचिन्तामणिर्ज्ञानकोशवद्ग्रन्थः । बोपदेवसमकालीनः यादवराजसमयस्थः ।

कुल्लूकः—मेधातिथिं बहुशोऽनुकरोति क्वचिद्विरुध्यते । (११५०–१३००)

माधवाचार्यः—दाक्षिणात्यः । हेमाद्रिणा विरुध्यते । बुक्कसमकालिकः। मातुलकन्याविषये मीमांसान्यायमालाविस्तराख्येन स्वीयग्रन्थेनास्य विरोधः।

मदनरत्नः—महानिबन्धः ( १४२५–१४५० )

शूलपाणिः—याज्ञवल्क्यस्मृतेर्व्याख्या दीपकलिका तत्प्रणेता । जीमूतवाहनवद्वङ्गीयेषु मान्यः । अस्य च स्मृतिविवेकादयो बहवो ग्रन्थाः ।

रुद्रधरः—मिसरुमिश्र, वाचस्पतिमिश्रः–मैथिलः । विवादचिन्तामणेः प्रणेता । अन्येऽपि प्रभूता ग्रन्था निरमीयन्त ।

कमलाकरभट्टस्य विवादताण्डव इत्यादयः ।

नीलकण्ठभट्टः— व्यवहारमयूखस्य प्रणेता । अयं महामान्यो विवादकुशलश्च । अतीव पाण्डित्यप्रचुरं लिखति । मिताक्षरां स्तौति च कुत्रचित् विनिन्दति ।

अन्ये अनन्तदेव, नागोजीभट्ट, बाळंभट्ट काशीनाथोपाध्यायादयः ।

जगन्नाथतर्कपञ्चाननः—विवादभङ्गार्णवस्य प्रणेता (१८०६)

दत्तकचन्द्रिका दत्तकमीमांसादयोऽपि वर्ण्याः ।

इदं सूत्रस्मृतिग्रन्थानां सविस्तरं वर्णनं मया विशेषतः आदृतं येन समन्वयापरपर्यायभूतैकवाक्यतायां पूर्वेषामेव ग्रन्थानामस्तूपयोगो न पश्चाद्भाविनां, यदि केनचिदङ्गीकृतस्तर्हि मास्त्वादरभाजनं सः ।

अत्र ये कालनिर्देशा उद्धृतास्ते सर्वे धर्मशास्त्रालोडनप्रमाणितमतीनां प्रोफेसरकाणमहोदयानामैतिहासिकग्रन्थगता एव यथायथं स्वीकृताः ।

॥ इति तृतीयं व्याख्यानं समाप्तम् ॥

# धर्मशास्त्रव्याख्यानमाला ।

## चतुर्थं व्याख्यानम् ।

तृतीये व्याख्याने धर्मशास्त्रीयावस्थात्रयेऽपि विद्यमानानां सर्वेषां ग्रन्थकृतां ग्रन्थानां च धर्मसूत्रस्मृतिनिबन्धात्मकानां वर्णनं कृतम् । तत्र च तत्तद्ग्रन्थकृतो देशसमयादि विविच्य तदन्तर्गतविषया निरूपिताः । धर्मसूत्रस्मृतीनां तथा मनुयाज्ञवल्क्ययोश्च सालक्षण्यवैलक्षण्ये परीक्षिते । अधुना प्रतिश्रुतानुसारं व्यवहारमयूखं पुरत उपक्षिप्य तद्दर्शितेन यथा पूर्वं व्यवहारस्य लक्षणं तदनु, अष्टादशानां पदानां संक्षिप्तं वर्णनं ततश्च दायभागस्य विशेषतो विवरणं करोमि । तत्र व्यवहारो हि याज्ञवल्क्येन—

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥

इति लक्षितः । मनुनाऽष्टादश पदानि वर्णितानि—

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
संभूय च समुत्थानं दत्तस्यानपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ इति ।

व्यवहारमातृकासु सभागृहस्य सभ्यादीनां लक्षणमासेद्धृदण्डादिकं च वर्णितम् । साक्षिणां लक्षणपूर्वकं सत्यासत्यता दर्शिता । साक्ष्याद्यभावे दिव्यानि तत्सर्वसाधारणो विधिः । घटविधि – वह्निविधि – जलविधि – विषविधि – कोशविधि – तण्डुलविधि – तप्तमाषविधि – फालविधि – धर्मजविधिरूपाणि दिव्यानि कथितानि । अथ च शपथानां निर्णयः ।

१ ऋणादानस्य लक्षणं नारदेन कृतम्—

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माश्च तदृणादानमुच्यते ॥

२ निक्षेपः—स्वधनस्यान्यस्मिन्नर्पणम् ।

३ अस्वामिना कृतो विक्रयः— अस्वामिविक्रयः ।

४ संभूय वणिगादीनां क्रियानुष्ठानम्-संभूयसमुत्थानम् ।
५ दत्तस्यानपाकर्म-दत्तस्य धनस्यापात्रबुद्ध्या क्रोधादिना वा ग्रहणम् ।
६ कर्मकरस्य भृतेरादानम्—वेतनस्यैव चादानम् ।
७ संविदो व्यतिक्रमः—कृतव्यवस्थाया अतिक्रमः ।
८ क्रयविक्रयानुशयः—क्रये विक्रये च कृते पश्चात्तापाद्विप्रतिपत्तिः ।
९ स्वामिपालविवादः – स्वामिपशुपालयोर्विवादः ।
१० सीमाविवादः—ग्रामसीमादिविप्रतिपत्तिः ।
११ दण्डवाक्पारुष्ये—वाक्पारुष्यमाक्रोशनादि, दण्डपारुष्यं ताडनादि ।
१२ स्तेयं – निह्नवेन धनग्रहणम् ।
१३ साहसम्—प्रसह्य धनाहरणादि ।
१४ स्त्रीपुंधर्मः—स्त्रियाश्च परपुरुषसंपर्कः, स्त्रीसहितस्य पुंसो धर्मे व्यवस्था ।
१५ अभ्युपेत्याशुश्रूषा—प्रतिश्रुत्य सेवाया अभावः ।
१६ विभागः—पैतृकादिधनस्य च विभागः ।
१७ द्यूतम्—मेषकुक्कुटादियोधनम् ।
१८ आह्वयः—प्राणिद्यूतम् ।

दायभागविषये पूर्वं सामान्यतो विविच्य विशेषवर्णनं क्रियते ।

व्यवहारे त्रयः प्रधानभूताः— १ विवाहः, २ दायहारिक्रमः, ३ दत्तकश्च । एते त्रयोऽपि धार्मिका इति वक्तुं शक्यम् । तत्र विवाहो विशेषतो धार्मिक एव । येन च दम्पत्योरैहिकपारलौकिकप्रवृत्तीनां धर्म्यत्वं तत्पुत्राणां च धर्म्यत्वम् । दत्तकपुत्रस्वीकारे हेतुद्वयम् । नामसंकीर्तनं पिण्डादिदानेन पारलौकिकाहितं च । द्वितीयं केवलधार्मिकं प्रथममप्यंशतः । दायहारिक्रमो यद्यपि लौकिककार्योपयोगी तथापि तन्निदानभूतः सापिण्ड्यशब्दः सपिण्ड-शब्दव्युत्पत्तिद्वारा धर्म्य एव । विवाहो वङ्गमहाराष्ट्रदाक्षिणात्येषु भिन्नः । तेन यस्मिन्देशे यया रीत्या संपाद्यते तथा स सुगृहीत एव । विवाहे संपन्ने तदीयं कार्यं सुव्यवस्थिततया संगृह्यते विधिभेदेऽपि न क्षतिः। मिताक्षराकृता दायो रक्तसंबन्धमनुसृत्य प्रतिपादितः । दायभागे तु स पिण्डदानद्वारा पिण्डग्राहिद्वारा च । अनयोरुभयोरप्ययं क्रमः सपिण्डपदानुरोधादेव केवलम् । उभाभ्यां सपिण्डशब्दो द्विधा विव्रियते । तथाहि—

सपिण्डशब्दार्थः-असपिण्डाम्- समानः एकः पिण्डो देहः यस्याः सा सपिण्डा......... । सपिण्डता च एकशरीरान्वयेन भवति। तथाहि, पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह सापिण्ड्यम् । एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा । तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरपि ।

एकशरीरावयवान्वयात्। तथा पितृव्यपितृष्वस्रादिभिरपि। तथा पत्या सह पत्न्या एकशरीरारम्भकतया। एवं भ्रातृभार्याणामपि परस्परमेकशरीरारब्धैः सहैकशरीरारम्भकत्वेन। एवं यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात् परंपरया वा एकशरीरावयवान्वयो वेदितव्यः। यद्येवं मातामहादीनामपि 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इत्यविशेषेण प्राप्नोति। स्यादेतत्। यदि तत्र प्रत्तानामितरे कुर्युरित्यादिविशेषवचनं न स्यात्। ... ... अवश्यं चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम्। 'आत्मा हि जज्ञ आत्मनः, अङ्गादङ्गात्संभवसि' इत्यादिश्रुतेः। तथा 'प्रजामनु प्रजायसे' इति च। 'स एवायं विरूढः प्रत्यक्षेणोपलभ्यते' इति आपस्तम्बवचनाच्च। तथा गर्भोपनिषदि एतत् षाट्कौशिकं शरीरं त्रीणि मातृतः त्रीणि पितृतः। अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृतः। इति तत्र तत्रावयवान्वयप्रतिपादनात्। निर्वाप्यसपिण्डान्वयेन तु सापिण्ड्ये मातृसंताने भ्रातृपुत्रादिषु च सापिण्ड्यं न स्यात् समुदायशक्त्यङ्गीकारेण रूढिपरिग्रहे अवयवशक्तिस्तत्र तत्रावगम्यमाना परित्यक्ता स्यात्। परंपरयैकशरीरावयवान्वयेन सापिण्ड्ये यथा नातिप्रसङ्गस्तथाग्रे तत्र मिताक्षरायामुक्तम्। व्यवहाराध्याये च ११७ श्लोके 'मातुर्दुहितरः शेषमृणात्' इत्यत्र 'युक्तं चैतत्। पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।' इति स्त्र्यवयवानां दुहितृषु बाहुल्यात् स्त्रीधनं दुहितृगामि। पितृधनं पुत्रगामि पित्रवयवानां पुत्रेषु बाहुल्यादिति। तत्र च गौतमेन विशेषो दर्शितः। 'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' इति। अस्यार्थः—प्रत्ताप्रत्तासमवायेऽप्रत्तानामेव स्त्रीधनम्। प्रत्तासु चाप्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठितानामेवेति। अप्रतिष्ठिताः-निर्धनाः। इति मिताक्षरा।

अथ च दायभागः। चतुर्थेऽध्याये--किं तूक्तादेव हेतोः पुत्रकुमारीदुहित्रोस्तुल्यवदधिकारः। एतयोश्चान्यतराभावेऽन्यतरस्य तद्धनं द्वयोरप्येतयोरभावे तूढाया दुहितुः पुत्रवत्याः संभावितपुत्रायाश्च तुल्योऽधिकारः स्वपुत्रद्वारेण पार्वणपिण्डदानसंभवात्। अत एव पूर्वोक्तदुहित्रभावे दौहित्रस्यैव धनाधिकारः। 'दौहित्रोऽपि ह्यमुत्रैनं संतारयति पौत्रवत्। ९।१३९ इति मनुवचनात्, न तु वन्ध्याविधवादुहित्रोः स्वसत्तया स्वजन्यसत्तया च पार्वणपिण्डदानाभावात्। अत एव नारदः--

पुत्राभावे च दुहिता तुल्यसन्तानदर्शनात्। ना. १३-५०

अत एव मिताक्षरादायभागयोर्भेदः। सपिण्डेति पदं द्विधा व्याख्यातमुभाभ्यां तेन द्विधा संप्रदायः प्रवृत्तस्तत्तद्ग्रन्थप्रामाण्यात्तत्तद्देशेषु। दायभागस्य वङ्गीयपण्डितकृतत्वात्तस्य तद्देशे प्रामाण्यम्। श्रीविज्ञानेश्वरस्य दाक्षिणात्यत्वात् महाराष्ट्रादिषु प्राबल्यम्। गुर्जरादिषु पूर्वोक्तोभयग्रन्थकृत्सदृशस्य कस्यापि विदुषो ग्रन्थाभावाद् मिताक्षराया एव प्राबल्यम्। यद्यपि गुर्जर-

वङ्गेषु तत्तद्ग्रन्थप्रामाण्यं तथापि तद्भिन्नस्यापि प्रसङ्गविशेषात् प्रामाण्यमाद्रियते। अन्येऽपि १ विवादताण्डव २ वीरमित्रोदय ३ व्यवहारमयूख ४ दत्तकमीमांसा ५ संस्कारकौस्तुभ ६ दायतत्त्व ७ दायक्रमसंग्रह ८ विवादार्णवसेतु ९ विवादभङ्गार्णव १० दत्तकमीमांसा ११ विवादचिन्तामणि १२ स्मृतिचन्द्रिका १३ पराशरमाधवेतिग्रन्थाश्च तत्तद्देशेष्वाद्रियन्ते।

अथ दायविभागो व्यवहारमयूखाद्यनुसारेणोच्यते तथाहि— दायादिनिर्णयोपयोगि स्वत्वम्–स्वामित्वम्। तच्च क्रयप्रतिग्रहादिजन्यः शक्तिविशेषः। तत्कारणता तु क्रयादीनां लोकव्यवहारादेव गम्यते न शास्त्रात्। तदनभिज्ञानामपि तद्दर्शनात्। स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः। (गौ० ध० सू० १०-३९-४२) इति तल्लोकसिद्धकारणानुवादकत्वेन गौतममतमपाकृतम्। स्वामिस्वत्त्वध्वंसमात्रेण यत् स्वस्य भवति तद् रिक्थामिति प्रयुञ्जते लोकाः। पितरि जीवति, उत्पत्त्यैव पुत्रादयोऽर्थस्वामित्वं लभन्ते 'उत्पत्त्यैवार्थस्वामित्वम्' इत्यादिवचनैस्तथा बोधनात्। तथा च—

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः।

इति याज्ञवल्क्यः। 'पितर्युपरते पुत्रा विभजेयुः' इति देवलवचनं तु विभागकालपरं न स्वत्वनिषेधकं तत्। पितुर्मणिमुक्ताधारणे प्रभुत्वं तादृशं न पुत्रादीनां तस्मिञ्जीवतीति बोधयितुं, स्थावरादिदाने तु पितुर्नाधिकारः। अत एवोक्तम्—

स्थावरं द्विपदं चैव यदपि स्वयमर्जितम्।
असंभूय सुतान् सर्वान् न दानं न च विक्रयः॥

इति। दानविक्रयादीनामेव निषेधो न भोगस्य। जेतुरपि नृपस्य सर्वभूदाने नाधिकारः। अत एव मीमांसायां षष्ठेऽध्याये (६-७-३) सार्वभौमेन सर्वा पृथ्वी माण्डलिकेन च मण्डलं देयमित्युक्तम्। संपूर्णपृथ्वीमण्डलस्य तत्तद्ग्रामक्षेत्रादौ स्वत्वं तु तत्तद्भौमिकादीनामेव। राज्ञां तु करग्रहणमात्रम्। अत एवेदानींतनपारिभाषिकक्षेत्रदानादौ न भूदानसिद्धिः किंतु वृत्तिकल्पनमात्रमेव।

दायपदस्य लक्षणम्—असंसृष्टं विभजनीयं धनं दायः। लाभाद्यर्थसंसृष्टधनव्यावृत्तयेऽसंसृष्टमिति। अत एव वणिगादिभिर्विभज्यमाने द्रव्ये न दायपदप्रयोगः। स्मृतिसंग्रहे—

पितृद्वारागतं द्रव्यं मातृद्वारागतं च यत्।
कथितं दायशब्देन तद्विभागोऽधुनोच्यते॥

इति। निघण्टौ—

विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः।

पितृपदं संबन्धिमात्रोपलक्षणम् । अयं दायो द्विधा । सप्रतिबन्धाप्रतिबन्धभेदेन । यत्र धनस्वामिनस्तत्पुत्रादेश्च जीवनं प्रतिबन्धकं स सप्रतिबन्धो यथा पितृव्यादिधनम् । यत्तु स्वामिसंबन्धादेव पुत्रादेर्धनार्जनोपायान्तरनिरपेक्षत्वात् स्वत्वं भवति सोऽप्रतिबन्धः । यथा पितृधनम् । तस्य विभागः—

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥

पुत्रैरिति पौत्रादीनामुपलक्षणम् । पित्र्यस्येति पितामहादीनाम् । द्रव्यसामान्याभावेऽपि त्वत्तोऽहं विभक्त इति व्यवस्थामात्रेणापि भवत्येव विभागः । तस्यैव लक्षणम्—

बुद्धिविशेषमात्रमेव हि विभागः ।

तेन भोजनादिषु सामानाधिकरण्येऽपि न क्षतिः । मनुर्विभागकालमाह—

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥

चशब्दोपादानेऽपि मरणसमुच्चयो न विवक्षितः । मदनरत्ने स्मृतिसंग्रहे—

पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि ।
न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥

एतदपवदतो बृहस्पतिनारदौ—

बृहस्पतिः—

पित्रोरभावे भ्रातॄणां विभागः संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥

नारदः—

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते चापि रमणे पितर्युपरतस्पृहे ॥

प्रत्तासु भगिनीषु चेति काकाक्षिगोलकन्यायेनोभयत्र रजोरमणनिवृत्त्योः संबध्यते । ततश्चेदं सिद्धम्— ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन् । निवृत्ते रजसि मातुर्जीवति पितरि चेच्छतीति । क्वचित्पितुरिच्छां विनाऽपि विभागः । बृहस्पतिः—

क्रमागते गृहक्षेत्रे पितापुत्राः समांशिनः ।
पैतृके न विभागार्हाः सुताः पितुरनिच्छया ॥

अर्थात् पितामहाद्यार्जिते पितुरनिच्छयापि विभागः । क्वचित् पितुरिच्छयापि पैतामहद्रव्यस्य विभागमाहतुर्मनुविष्णू । अकामे पितरि व्याध्यादिना चासमर्थेऽन्यथाशास्त्रकारिणि च ज्येष्ठभ्रातृसंमत्या विभागो भवति । हारीतः—कामं दीने प्रोषिते आर्ते गते वा ज्येष्ठोऽर्थांश्चिन्तयेत् । शङ्खलिखितमतेन ज्येष्ठानुमत्या कार्यज्ञो ज्येष्ठानन्तरजोऽपि चिन्तयेदर्थान् । सर्वेषां तथात्वे

त्वनियमः। याज्ञवल्क्येन सर्वे पुत्राः समांशिनः कर्तव्या ज्येष्ठो वा विशिष्टांशेन संभावनीय इत्युक्तम्। अत्रैवेच्छा नियामिका नाव्यवस्थाकरणे।

'विभागं चेत् पिता कुर्यादिच्छया विभजेत्सुतान्।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः॥

यदि पूर्वोक्तव्यवस्था नेष्येत तर्हि एकस्मै लक्षं कस्मैचित् कपर्दिकां, अन्यस्मै न किमपि दातव्यमित्यव्यवस्थापत्तिः। मनुना ज्येष्ठाविभागे नवमाध्याये विशेष उक्तः--

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।
तदर्धं मध्यमस्य स्यात्तदर्धं तु कनीयसः॥
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना।
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽपरः॥
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः।"

यमलयोर्मध्ये प्रथमप्रसूतस्य ज्यैष्ठ्यमाह मनुः--

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्विति स्मृतम्।
यमयोश्चैव संज्ञासु जन्मतो ज्येष्ठता मता॥
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्।
संतानः पितरश्चैव तस्मिञ्ज्यैष्ठ्यं प्रतिष्ठितम्॥

इति। यत्तु पिण्डसिद्ध्यादिवैद्यकग्रन्थेष्वनन्तरप्रसूतस्य ज्यैष्ठ्यमुक्तं तदनेन कार्यांशे बाध्यते। तस्याश्रुतिमूलत्वात्। मासेन शुद्धीभवतीतिवत्। यत्तु--

द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात्।

इत्यादिना भागवते पश्चाज्जातस्य ज्यैष्ठ्यमुक्तं तदप्यनेन बाध्यते। पुराणेषु स्मृतिविरुद्धाचाराणां बहुशो दर्शनात्। देशाचारतो व्यवस्था ज्ञेयेति केचित्। युक्तं तु पूर्वोक्तमेव। अयं च विशिष्टविभागः कलौ नेष्टः। कलिवर्ज्येषु पाठात्। पितुरिच्छानुसारं समविषमद्रव्यात्मको विभाग इति नारद वचनं—

'पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
तेषां स एव धर्मः स्यात् सर्वस्य हि पिता प्रभुः।'

इति युगान्तरपरम्। यदि पुत्राणां विभागः क्रियते। तदा पत्न्योऽपि समांशकाः कर्तव्याः--

'यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा॥

यदि स्त्रीधनत्वेनार्धं दत्तं तर्हि पुत्रैः समांशभाक्त्व पत्न्या यथा भवति तथा वर्तितव्यम्। अधिकधनं तु न देयम्। 'शक्तस्यानीहमानस्य किंचिद् दत्त्वा प्रतिक्रिया' इति याज्ञवल्कीयात् अर्जनसमर्थस्य पितृद्रव्यमनिच्छतः पुत्रस्य

किंचिद्दानेन पृथक्क्रिया कर्तव्या। पितृमरणानन्तरं तु समविभाग एव। समानो मृते पितरि रिक्थभाग इति हारीतः। अथवा जननी पुत्रसमानभागा कर्तव्या। सापत्नमातुः पितामह्याश्चांशमाह व्यासः—

असुताश्च पितुः पत्न्यः समानांशाः प्रकीर्तिताः।
पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्तिताः॥

सर्वा इत्यन्येन पितामहीसपत्न्योऽपि गृह्यन्ते। पितृपत्न्यः सर्वा मातरः। तत्सुताः सर्वे भ्रातरः। तत्स्वसारो भगिन्य इति वचनात्। तदेतद्वचनं दायभागपरं न मातुलगोत्रवर्जनादावुपयोगि।

अनेकपितृकाणां पितृतो भागकल्पनेति याज्ञवल्क्यवचसाऽनेकभ्रातृपुत्राणां पितृतो भागकल्पना कर्तव्या। प्रपौत्रपुत्रादिः पितृपितामहप्रपितामहेषु मृतेष्वनन्तरं वृद्धप्रपितामहे मृतेऽन्यस्मिंश्च तत्पुत्रादिके जीवति तद्धनं न लभते। पुत्रपौत्रप्रपौत्रसामान्याभावे सोऽपि लभत एवेत्यर्थः।

अविभक्तविभक्तानां कुल्यानां वसतां सह।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः॥

इति देवलोक्तेः। इदं तद्देशजविषय उक्तम्। देशान्तरस्थस्तु पञ्चमादिरपि लभते।

तृतीयः पञ्चमश्चैव सप्तमश्चापि यो भवेत्।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम्॥

इति देशान्तरप्रक्रमेण बृहस्पतिः। क्वचिन्मातृतो विभागमाह बृहस्पतिः–

यद्येकजाता बहवः समाना जातिसंख्यया।
सापत्न्यास्तैर्विभक्तव्यं मातृभागेन धर्मतः॥

व्यासः-

समानजातिसंख्या ये जातास्त्वेकेन सूनवः।
विभिन्नमातृकास्त्वेषां मातृभागः प्रशस्यते॥

अयं मातृसमानो विभागो याज्ञवल्क्येनानुमत इति प्रतीयते। 'प्रव्राजिष्यन् वा अरेऽहमस्मि। अनया कात्यायन्यान्तं ते करवाणि' इति बृहदारण्यकोक्तेः। विजातीयविभागमाह याज्ञवल्क्यः—

चतुस्त्रिद्व्येकभागाः स्युः क्रमशो ब्राह्मणात्मजाः।
क्षत्रजास्त्रिद्व्येकभागाः विड्जास्तु द्व्येकभागिनः॥

बृहस्पतिः–

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्॥

देवलः–

शूद्रयां द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥

अपरिणीतशूद्रापुत्रस्तु द्रव्यांशमपि न लभते । तथा च मनुः–

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥

पितृमरणोत्तरं विशेषमाह बृहस्पतिः—

अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।
लभेत जीवनं शेषं सपिण्डाः सममाप्नुयुः ॥

शूद्रापुत्रवत्प्रातिलोमास्विति गौतमधर्मसूत्रे । विभागानन्तरोत्पन्नपुत्रे विशेषमाह गौतमः—विभक्तजः पित्र्यमेव । बृहस्पतिरपि—

" पुत्रैः सह विभक्तेन पित्रा यत्स्वयमार्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथर्णे च दानाधानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वाऽशौचादिकक्रियाम् ॥

केवलर्णदानप्रसङ्गे तु विभक्तेभ्यो द्रव्यं गृहीत्वा ऋणं देयम् । पितृमरणोत्तरं विभागकालेऽस्पष्टगर्भायां[१] मातरि तत्सपत्न्यां भ्रातृपत्न्यां वानन्तरसमुत्पन्ने विशेषमाह याज्ञवल्क्यः–

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

विभागश्च सर्वैर्भ्रातृभिः स्वस्वांशात् किंचित् किंचिदुद्धृत्य यथा स्वांशसमो भवति तथा कार्यः । 'पितृविभक्ताविभागा अनन्तरोत्पन्नस्य विभागं दद्युः'' ( आप० ध० सू० ) तदंशेषु रेकसेकसहिते स एवाह याज्ञवल्क्यः—

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ।

पितृमरणोत्तरं विभागे विशेषमाह बृहस्पतिः—

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः ।
संस्कार्याः पूर्वजेनैव पैतृकान्मध्यकाद्धनात् ॥

भ्रातृग्रहणं भगिनीनामप्युपलक्षणम् ।

असंस्कृतास्तु यास्तत्र पैतृकादेव ता धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥

इति भगिनीसंस्कारे भ्रातृभिः स्वीयश्चतुर्थांशो देयः प्रत्येकम् । दायग्रहणव्यवस्थोपयोगितया मुख्यगौणपुत्रव्यवस्थामाह याज्ञवल्क्यः—

---

१ गर्भः पित्र्यं रिक्थमर्हतीति कालिदासः शाकुन्तले ।

औरसो धर्मपत्नीजस्तत्सुतः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं कृतः ।
दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः ।
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ॥
या० २-१२८-१३२

एवं द्वादश पुत्राः । पुत्रिकापुत्रो द्विधा । तत्र प्रथमः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥

इति । द्वितीयश्च–द्वितीयः पुत्रिकैवेति वसिष्ठधर्मसूत्रम् । अस्मिन् पक्षे कन्ययैवौर्द्ध्वदेहिकं कार्यम् । अत्र दत्तकभिन्ना गौणाः पुत्राः कलौ वर्ज्याः । 'दत्तौरसेतरेषां तु पुत्रत्वेन प्रतिग्रहः' इति तन्निषेधेषु पाठात् । पुनर्विभागमाह मनुः—

विभागे यत्र संदेहो दायादानां परस्परम् ।
पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि ॥

विभक्तकृत्यमाह नारदः—

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत्कार्येषु संमताः ॥
स्वभावाद्यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै ॥

इति । पञ्चमहायज्ञादयो धर्माः । ते विभक्ताः परस्परानुमितिं विनापि दानविक्रयादि कुर्युरित्यर्थः ।

अविभक्ता विभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥

इति । यद् बृहस्पतिमतं तद् द्रव्यांशे विभक्तानामप्यविभक्तक्षेत्राद्युत्पन्नस्यादिदानादावनुमतिं विनाधिकारप्रतिषेधार्थमिति मदनः । विभक्ताविभक्तसंदेहनिरासार्थं विभक्तानुज्ञया व्यवहारसौकर्यार्थमिति विज्ञानेश्वरादयः । स्वेच्छया विभक्तं पुनश्च विवदमानं प्रत्याह स एव बृहस्पतिः—

स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥

अनुबन्धः-निर्बन्धः ।

२

इत्यप्रतिबन्धो दायः।

अथ सप्रतिबन्धदायविषय उच्यते—
तत्र विभक्तस्यासंसृष्टिनो धनग्रहणे क्रममाह—

याज्ञवल्क्यः—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥

—अ० २ श्लो० १३५–१३६

पत्न्या अपुत्रविभक्तासंसृष्टपतिस्वापतेयग्रहणे प्रथमाधिकारप्रतिपादकान्यपराणि भूयांसि स्मृतिवचनानि। तत्र बृहस्पतिः—

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति।
जीवत्यर्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥
सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः।
अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी॥

इति। योगीश्वरोऽपि पूर्वाभावे पराधिकारं वदन् सर्वप्राथम्येन पत्न्या एवाधिकारमभिधत्ते। विष्णुरपि—'अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे पितृगामि, तदभावे मातृगामि, तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे बन्धुगामि, तदभावे सकुल्यगामि, तदभावे शिष्यगामि, तदभावे सहाध्यायिगामि, तदभावे ब्राह्मणधनवर्जं राजगामीति। बन्धुरत्र सपिण्डः। सकुल्यः सगोत्रः। बन्धुपदेन वक्ष्यमाणपितृबन्ध्वादिग्रहणे योगीश्वरोक्तक्रमविरोधापत्तेः। स्त्रीविषये तात्त्विकीं व्यवस्थामाह कात्यायनः—

भोक्तुमर्हति क्लृप्तांशं गुरुशुश्रूषणे रता।
न कुर्याद्यदि शुश्रूषां चैलं पिण्डं नियोजयेत्॥

इति। गुरुः श्वशुरादिः। तदिच्छायामंशभाक्त्वमन्यथा ग्रासाच्छादनमात्रमित्यर्थः। शङ्कितव्यभिचारायाः अपि भरणमात्रमेव।

'विधवा यौवनस्था चेन्नारी भवति कर्कशा।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा॥

इति हारीतः। कर्कशा—'शङ्कितव्यभिचारा' इति मिताक्षरा। तत्सिद्धं संयता पत्नी धनग्राहिणीति। अनेकास्तु ता विभज्य गृह्णीयुः। यत्तु 'तस्मात् स्त्रियोऽनिन्द्रिया अदायादाः' इति श्रुतिवचनं तन्मूलकं च निरिन्द्रिया ह्यदायादाः स्त्रियो नित्यमिति स्थितिः। ( मनु० ९–१८ ) इति मनु-

वचनं तद् द्वयमपि यासां शुल्कग्राहिकया धनं नोक्तं तद्विषयमवसेयम्। तस्या अभावे दुहिता। अत एव मनुः–

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥

दुहितरोऽनेकाश्चेद्विभज्य गृह्णीयुः। तत्रापि ऊढानूढयोरनूढैव।

पत्नी भर्तुर्धनहरी या स्याद्व्यभिचारिणी।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा॥

इति कात्यायनीयात्। ऊढासु सधनानिर्धनयोर्निर्धनैव लभेत्। स्त्रीधनं दुहितॄणामप्रत्तानां, अप्रतिष्ठितानां चेति गौतमोक्तेः (गौ. ध. सू. २८–२२)। अप्रतिष्ठिताः–निर्धनाः। स्त्रीपदं पितुरप्युपलक्षणम्। इति साम्प्रदायिकाः। अत्र साम्प्रदायिकपदेन श्रीविज्ञानेश्वरग्रहणम्।

चतुर्थव्याख्यानं समाप्तम्।

## पञ्चमं व्याख्यानम् ।

## स्मृतिनिबन्धगतदायभागयोस्तारतम्यम् ।

दुहित्रभावे दौहित्रः—

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः ॥

इति विष्णूक्तेः। दौहित्राभावे पिता, तदभावे माता। अत्र विज्ञानेश्वरः *'पितराविंत्येकशेषविग्रहे माता च पिता च पितरौ' इति, अत्र मातुः पूर्वनिवेशात् पूर्वं माता तदनन्तरं पितेति क्रममाह परं तत् कात्यायनवचोविरुद्धं तत्रैकशेषसमासो नास्ति पिता मातेत्यसमस्ते पदे। तथा च कात्यायनः—

अपुत्रस्यास्य कुलजा पत्नी दुहितरोऽपि वा ।
तदभावे पिता माता भ्राता पुत्राः प्रकीर्तिताः ॥

मातुरभावे सोदरो भ्राता, तदभावे तत्पुत्रः । यत्तु विज्ञानेश्वरादयो भिन्नोदराः सोदराभावे ग्राह्याः, तदभावे सोदरसुता इत्याहुस्तन्न भ्रातृपदस्य सोदरे शक्त्या भिन्नोदरे च गौण्या वृत्तिद्वयविरोधात् । सोदरत्वेन धनसम्बन्धवता पितृव्येण सहेतरभ्रातृपुत्राः समांशं लभेरन् । भ्रातृपुत्राभावे गोत्रजाः सापिण्डाः। तत्राप्यादौ पितामही ।

मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ।

इति मनूक्तेः। यद्यपीयं मातुरनन्तरं श्रुता तथादि बद्धक्रमभ्रातृपुत्रान्तेषु मध्ये निवेशायोगादागन्तूनामन्ते निवेश इतिवत् भ्रातृपुत्रान्ते निवेश्या ।

तदभावे भगिनी ।

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।

इति मनूक्तेः ।

बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

इति बृहस्पत्युक्तेः । तस्यां अपि भ्रातृगोत्र उत्पन्नत्वेन गोत्रजत्वाविशेषाच्च ।

---

* अत्र जीमूतवाहनकृतदायभागे– पितरावित्यत्र पितृक्रम एवावगम्यते । तथा हि पितृपदात् प्रातिपदिकात् प्रथमं पितुरवगतेः पश्चात्तु द्विवचनबलेन एकशेषकल्पनया मातुरवगमात् । अत्र वीरमित्रोदयकृतोभयोरपि खण्डनं कृतं सोपालम्भो वाग्विसर्गश्च कृतः । मातापित्रोर्गुणवदगुणवत्त्वापेक्षया व्यवस्था तेन विकल्प इति वीरमित्रोदयसिद्धान्तः ।

सगोत्रता परं नास्ति। तदभावे पितामहसपत्नभ्रातरौ विभज्य गृह्णीतः। स्वजनकजनकत्वेन स्वजनकजन्यत्वेन च समानप्रत्यासत्तेः। प्रत्यासत्ति-साम्ये पाठक्रमाद्यणुविशेषान्तराभावे चान्यत्राप्येवमेव। तेन तयोरभावे प्रपितामहपितृव्यभिन्नोदरभ्रातृपुत्रा विभज्य गृह्णीयुः सर्वसपिण्डाः समानो-दकाश्च प्रत्यासत्तिक्रमेण। तांश्चाह मनुः—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥

इति सप्तमेऽतीत इत्यर्थः। सोदकाभावे बन्धवः। ते च स्मृत्यन्तरे। ते नव—१ आत्मपितृष्वसृपुत्रः। २ आत्ममातृष्वसृपुत्रः। ३ आत्ममातुलपुत्रः। ४ पितुः पितृष्वसृपुत्रः। ५ तन्मातृष्वसृपुत्रः। ६ तन्मातुलपुत्रः। ७ मातुः मातृ-ष्वसृपुत्रः। ८ तत्पितृष्वसृपुत्रः। ९ तन्मातुलपुत्रः।

बन्धूनामभाव आचार्यः। तदभावे शिष्यः। पुत्राभावे प्रत्यासन्नः स-पिण्डस्तदभाव आचार्यस्तदभावेऽन्तेवासी (आप० ध० सू० २-६-१४)। शिष्याभावे सहाध्यायी, तदभावे श्रोत्रियः। 'श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्' इति गौतमोक्तेः। तदभावेऽन्यो ब्राह्मणः।

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते॥

इति कात्यायनीयात्। नारदश्च—

सर्वत्रादायिकं राजा हरेद् ब्रह्मस्ववर्जितम्।
अदायिकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत्॥

बृहस्पतिः—

येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः।
तेषां धनहरो राजा सर्वस्यापि पतिर्हि सः॥

वानप्रस्थस्य तावत्—

अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा।
अर्थस्य निचयं कुर्यात् कृतमाश्वयुजे त्यजेत्॥

इति वचनाद्धनसम्बन्धोऽस्त्येव। यतेरपि 'कौपीनाच्छादनार्थं वा वासोऽपि बिभृयाच्च यः। योगसंभारभेदांश्च गृह्णीयात् पादुके तथा' इति वचनाद् वस्त्रपुस्तकसंबन्धोऽस्त्येव नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादिसंबन्धोऽस्त्ये-वेति तद्विभागकथनं युक्तमेव। -इति मिताक्षरा। यत्यादे रिक्थविषये याज्ञवल्क्यः—

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः॥

ब्रह्मचारी नैष्ठिकः। उपकुर्वाणस्य तु पित्रादय एव। धर्मभ्राता प्रतिपन्नो

भ्राता। एकतीर्थः— एकाश्रमी । आचार्यादीनां प्रातिलोम्येन क्रम इति विज्ञानेश्वरः। वनस्थस्य 'धनमाचार्यो गृह्णीत शिष्यो वा (वि०ध० १५-१५) इति विष्णूक्तेरानुलोम्येनेति मदनः। मृतस्य रिक्थहारिणा येन केनापि राजपर्यन्तेनौर्ध्वदेहिकं दशाहान्तं कार्यम्। तथा च विष्णुः—यश्चार्थहरः स पिण्डदायी स्मृतः। इति।

## अथ संसृष्टिनिर्णयः।

तत्र संसर्गमाह–

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः।
पितृव्येणाथ वा प्रीत्या स तत्संसृष्ट उच्यते॥

अत्र पितृभ्रातृपितृव्यैरेव सह संसृष्टता नान्येन वचनेऽनुपादानादिति मिताक्षरादिषु। विभागकर्तृसामानाधिकरण्येनैव सा इति युक्तम्। पित्रादिपदानि तु विभागकर्तृमात्रोपलक्षकानि। तेन पत्नीपितामहभ्रातृपौत्रपितृव्यपुत्रादिभिरपि सह संसृष्टता भवति। विभक्तो य एकत्र स्थितः स संसृष्ट इति सामानाधिकरण्याद्विभक्तभ्रात्रोः पुत्रादीनां न संसर्गः। विद्यमानं भावि वा धनमावयोः पुनर्विभागावधि साधारणमित्याकारिका बुद्धिरिच्छा वा संसर्गः। तत्र संसृष्टिनां पुनर्विभागे विशेषमाह मनुः–

संसृष्टाः सह जीवन्तो विभजेरन् पुनर्यदि।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥

संसृष्टिनां द्रव्यन्यूनाधिकभावेऽपि सम एव विभागः समस्तत्रेत्यनेन बोधितत्वात्। आचारोऽप्येवम्। तेनाचारमूलकत्वेऽस्य वचसः संभवति तद्विरुद्धश्रुतिकल्पनमन्याय्यम्। व्यवहारशास्त्रस्य व्याकरणवत्प्रायेणाचारमूलकत्वाच्चेति तु परे।

संसृष्टिनां तु यः कश्चिद्विद्याशौर्यादिभिर्धनम्।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः॥

इत्यनेन संसृष्टिविभागे संसृष्टधनविरोधेनाप्यर्जने भागद्वयम्। संसृष्टिधनहरणाधिकारिणमाह याज्ञवल्क्यः–

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः।

— अ० २ श्लो० १३८.

'पत्नी दुहितरः ... ... ...' इत्यस्यापवाद एवायम्। तेनायमर्थः—संसृष्टिधनहरणाधिकारितावच्छेदकं न पत्नीत्वादि किन्तु संसृष्टत्वमिति। विज्ञानेश्वरादिभिरुत्सर्गापवादयोः समविषयत्वनियमात् संसृष्टिसंनिहितपत्न्या-

१ अधुना मठपतिधनविषयेऽनेनैव शास्त्रेण निर्वाहः क्रियते तन्न योग्यम्।

दिसद्भावेऽपि, अन्यः संसृष्टयेव गृह्णीयादिति तच्चिन्त्यम्। समानविषयत्वं तु न सर्वांशेऽपेक्ष्यते। किन्तु यथाकथंचिन्मृतसपिण्डविषयतया। असंसृष्टि-सोदरसंसृष्टिभिन्नोदरयोर्विभज्य धनग्रहणमाह याज्ञवल्क्यः–

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः॥

अत्रान्योदर्यान्यमातृजादिपदेन सापत्नो भ्रातैवोच्यते किंतु पितृव्यादिरपि योगाविशेषात्। तेनैकः संसृष्टत्वेन परः सोदरत्वेनेति द्वावपि विभज्य गृह्णीयातामिति निष्कर्षः। मनुः–

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥
सोदर्या विभजेयुस्तं समेत्य सहिताः समम्।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः॥

हीयेताश्रमगतिपातित्यादिना। अन्तर्धनादिविषये विशेषमाह प्रजापतिः–

अन्तर्धनं तु यद् द्रव्यं संसृष्टानां तु तद्भवेत्।
भूमिं गृहं त्वसंसृष्टाः प्रगृह्णीयुर्यथांशतः॥

अन्तर्धनं भूमिनिक्षेपादिना गोपितुं शक्यं सुवर्णरूप्यादि। संसृष्टो भिन्नोदरो गृह्णीयात्। भुवं तु सोदरभ्रातरः। गवाश्वादि तु सोदरासोदरभ्रातरः। संसृष्टिविषये शङ्खनारदयोर्मतम्—

भ्रातृणामप्रजाः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना॥
भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु॥
या तस्य दुहिता तस्याः पित्र्यंशाद्भरणं मतम्।
आसंस्काराद्भरेद्भागं परतो बिभृयात् पतिः॥

संसृष्टिमरणे तदीयासंसृष्टिभ्रात्रादीनां क्रमः। मदनेन तत्राप्यादौ माता ततः पिता, ज्येष्ठा संयता पत्नी तदभावे भगिनी दुहिता वा। दुहितृभगिन्योरभावेऽनन्तरः सपिण्डः। इति।

दायभागे जीमूतवाहनकृते ( ९७ पत्रे कलिकातामुद्रिते ) तत्र मनुना—त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते' इति ९-१८६ दायभागप्रकरणे कीर्तनात्, याज्ञवल्क्येनापि 'पिण्डदोंऽशहरश्चैषाम्'। २-१३३ इति पिण्डदानेनाधिकारदर्शनात्पुत्रस्यापि सातिशयपिण्डदानेन नरकत्राणकारणतया मुख्यभावेनाधिकारावगतेः–

मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च॥

एतेषां चैव भार्याभ्यः स्वसुर्मातुः पितुस्तथा ।
श्राद्धदानं तु कर्तव्यमिति वेदविदां स्थितिः ॥

इति वृद्धशातातपवचनात् । अमीषां पिण्डदत्वप्रतिपादनादयं पिण्डदानविशेषादधिकारिक्रमः । तत्र प्रथमं देवरः, तत्पिण्डतद्भर्तृपिण्डतद्भर्तृदेयपूर्वपुरुषत्रयपिण्डदातृत्वात् सपिण्डत्वाच्च तद्धनेऽधिक्रियते । तदभावे भ्रातृश्वशुरदेवरयोः सुतः तत्पिण्डतद्भर्तृपिण्डतद्भर्तृदेयपूर्वपुरुषद्वयपिण्डदातृत्वात् सपिण्डत्वाच्च पितृव्यस्त्रीधनेऽधिकारी । तदभावे त्वसपिण्डोऽपि भगिनीपुत्रः । तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डत्रयदानात् मातृस्वसृधनेऽधिकारी । तदभावे स्वभर्तृभागिनेयः पुत्राद् भर्तुर्दुर्बलत्वात् तत्स्थानपातिनोरपि तथैव बलाबलस्य न्याय्यत्वात् तद्भर्तृदेयपूर्वपुरुषत्रयपिण्डदानात् तत्पिण्डदानात् तद्भर्तृपिण्डदानाच्च मातुलानीधनेऽधिकारी । तदभावे भ्रातृसुतः तत्पितृपितामहयोस्तस्याश्च पिण्डदानात् पितृस्वसृधनेऽधिकारी । तस्याप्यभावे श्वशुरयोः पिण्डदानाज्जामाता श्वश्रूधनेऽधिकारीति ।

जीमूतवाहनकृतदायभागश्रीकृष्णतर्कालंकारव्याख्यायामेकादशे षष्ठपरिच्छेदे—अत्रायं मृतपुंधनाधिकारिक्रमः । तत्र प्रथमं पुत्रः, तदभावे पौत्रः, तदभावे प्रपौत्रः, मृतपितृकपौत्र, – मृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकारः । प्रपौत्रपर्यन्ताभावे पत्नी । सा च प्राप्तभर्तृदाया भर्तृकुलं तदभावे पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्तृदायं भुञ्जीत तथा भर्तुरुपकारार्थं यथाकथंचिद् दानादिकमपि कुर्वीत न तु स्त्रीधनवत् स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता, तत्र प्रथमं कुमारी, तदभावे वाग्दत्ता, तदभावे ऊढा सा च पुत्रवती संभावितपुत्रा च द्वे युगपदेवाधिकारिण्यौ, वन्ध्या पुत्रहीना विधवा च नाधिकारिणी । ऊढाया अभावे दौहित्रः, तदभावे पिता, तदभावे माता, तदभावे भ्राता तत्रापि प्रथमं सोदरः तदभावे वैमात्रेयः, मृतस्य भ्रातृसंसृष्टे तु सोदरमात्रविषये प्रथमं संसृष्टसोदर एवाधिकारी तदभावे चासंसृष्टसोदरः । एवं वैमात्रेयमात्रविषये प्रथमं संसृष्टवैमात्रेयः, तदभावे चासंसृष्टवैमात्रेयः । यदा तु संसृष्टो वैमात्रेयः, सोदरश्चासंसृष्टस्तदा तावुभौ तुल्यवदधिकारिणौ । भ्रातॄणामभावे भ्रातृपुत्रः । तत्रापि प्रथमं सोदरभ्रातृपुत्रः, तदभावे वैमात्रेयभ्रातृपुत्रः, संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्रः, तदभावे चासंसृष्टसोदरभ्रातृपुत्रः । वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः, तदभावे चासंसृष्टवैमात्रेयभ्रातृपुत्रः, यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रश्च संसृष्टः तदा द्वौ भ्रातृवत्तुल्याधिकारिणौ । भ्रातृपुत्राभावे भ्रातृपौत्रः तत्रापि भ्रातुः सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्रः स च सोदरभगिनीपुत्रः, वैमात्रेयभगिनीपुत्रः, तदभावे

पितामहः, तदभावे पितामही, तदभावे पितुः सहोदरः, तदभावे पितुर्वैमात्रेयः, तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकारः। तदभावे पितामहदौहित्रः, तत्रापि पितृसोदरभगिनीपुत्रः, तदभावे पितृवैमात्रेयभगिनीपुत्रश्च वक्ष्यमाणप्रपितामहदौहित्राधिकारेऽप्येवं, तदभावे प्रपितामहः, तदभावे प्रपितामही, तदभावे पितामहसहोदरभ्रातृतद्वैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिणः। एतावत्पर्यन्तानां धनिभोग्यपिण्डदातॄणामभावे धनिदेयपिण्डदातॄणां मातामहमातुलादीनामधिकारः। तत्र प्रथमं मातामहस्तदभावे मातुलतत्पुत्रपौत्राणां क्रमेणाधिकारः। तदभावे चाधस्तनकुल्यानां धनिभोग्यलेपदातॄणां प्रतिप्रणप्तृप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः। तदभावे पुनरूर्ध्वसकुल्यानां धनिदेयलेपभुक् वृद्धप्रपितामहादितत्संततिनामासात्तिक्रमेणाधिकारः। तदभावे समानोदकानामधिकारः। तेषामभावे चाचार्यस्य तदभावे शिष्यस्य तदभावे सब्रह्मचारिणोऽधिकारः। तदभावे चैकग्रामस्थसगोत्रसमानप्रवरयोः क्रमेणाधिकारः। उक्तपर्यन्तानां सर्वेषां संबन्धिनामभावे ब्राह्मणधनवर्जं राजा गृह्णीयात्। ब्राह्मणधनं तु त्रैविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः। एवं वानप्रस्थधनं भ्रातृत्वेनानुमतोऽपरवानप्रस्थ एकतीर्थसेवी गृह्णीयात्। तथा यतिधनं सच्छिष्यः। नैष्ठिकब्रह्मचारिणो धनमाचार्यः, उपकुर्वाणस्य तु ब्रह्मचारिणो धनं पित्रादिर्गृह्णीयादिति संक्षेपः।

जीमूतवाहनदायभागस्यान्तिमश्लोकैरिदं ज्ञातुं शक्यं यन्निबन्धव्याख्याकृद्भिर्विपरिवर्तितः स्मृतीनामर्थो मया ( जीमूतवाहनेन ) तत्संवादार्थं प्रयत्नः क्रियत इति।

नाचार्यगौरवपराहतदायभाग-
तत्त्वप्रबोधजनरञ्जनमत्र शक्यम्।
किंतु प्रमाणपरतन्त्रधियां मुनीनां
संवादमात्रकृतये कृतिनः प्रयत्नः ॥ १ ॥

बहुविधपूर्वनिबन्धव्याख्यासंजातसंशयस्यैतत् ॥
जीमूतवाहनकृतं प्रकरणमनुपत्तये ध्येयम् ॥ २ ॥

पारिभद्रकुलोद्भूतः श्रीमान् जीमूतवाहनः।
दायभागं चकारेमं विदुषां संशयच्छिदे ॥ ३ ॥

इदानीमुक्तस्य दायस्यापवादमाह—

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।
अन्धोऽचिकित्स्यरोगयाद्या भर्तव्याः स्युर्निरंशकाः ॥

१

इति याज्ञवल्कीयात् क्लीबादयो निरंशाः। आद्यशब्देनाश्रमान्तरगतापितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम् । तथा च नारदः—

पितृद्विद् पतितः षण्ढो यश्च स्यादौपपातिकः ।
औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ॥

तथापि तेषां भरणं कर्तव्यम् ।

सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥
— मनु० ९ – २०२

इति मनुस्मरणात् । एतेषां विभागात्प्रागेव दोषप्राप्तौ अनंशत्वमुपपन्नं न पुनर्विभक्तस्य । विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव ।

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

इत्यस्य समानन्यायत्वात् । पतितादिषु पुंलिङ्गत्वमविवक्षितं तेन तादृशकन्यानामपि भरणं कर्तव्यम् । क्लीबादिपुत्रादयस्तु नानंशाः—

'औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ।'

औरसक्षेत्रजयोर्ग्रहणमितरव्युदासार्थम् । तथैव तद्दुहितृणामपि भरणम् ।

सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः ।

तेषामव्यभिचारिपत्नीनां भरणं कर्तव्यम्—

अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥

अथ स्त्रीधनम्—

अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

इति मनुः । अत्रैव याज्ञवल्कीयमन्तर्भवति । मनूक्तौ षडिति न्यूनसंख्याव्यवच्छेदार्थम् । विष्णुश्चाधिकमाह—

'पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतमाधिवेदानिकं बन्धुदत्तं शुल्कान्वाधायकम् । [ वि. ध. १७–१८ ] । अध्यग्न्यादीन्याह कात्यायनः—

विवाहकाले यत्स्त्रीभ्यो दीयते त्वग्निसंनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावाहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥
प्रीत्या दत्तं तु यत् किंचित् श्वश्र्वा वा श्वशुरेण वा ।

पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥
विवाहात् परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया।
अन्वाधेयं तु तत् प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥
गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम्।
मूल्यं लब्धं तु यत् किंचित् शुल्कं तत्परिकीर्तितम् ॥

गृहोपस्कराद्यलाभे तन्मूल्यं कन्यादानकाले कन्यायै दत्तं तच्छुल्कमित्यर्थः। आधिवेदनिकं याज्ञवल्क्येन लक्षितम्—

अधिविन्नस्त्रियै दद्यात् आधिवेदनिकं समम्।
न दत्तं स्त्रीधनं यासां दत्ते त्वर्धं प्रकल्पयेत् ॥

देवलः—

भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैः।

कात्यायनः—

पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै।
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावराद्दृते ॥

स्थावरातिरिक्तं सहस्रद्वयपणावधि देयमिति मदनः। व्यासः—'द्विसाहस्रः परो दायः' इत्यादिना इदं द्विसहस्रावधिकं दानं प्रतिवर्षम्। अनेकवर्षेष्वितोऽधिकमपि शक्तौ स्थावरमपि च देयमिति स एवाह। दायादवञ्चनेन दत्ते धारणमात्रार्थं दत्ते च भूषणादौ स्त्रीस्वत्वं नास्तीत्याह कात्यायनः—

तत्र सोपधि यद्दत्तं यच्च योगवशेन वा।
पित्रा भ्रात्राथ पत्या वा न तत् स्त्रीधनमुच्यते ॥

शिल्पप्राप्ते पित्रादिभिन्नसख्यादिप्राप्तेऽपि स्त्रीधनत्वं नास्तीत्याह स एव—

प्राप्तं शिल्पैस्तु यत् किंचित् प्रीत्या चैव यदन्यतः।
भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥

शिल्पाद्यर्जितधनं स्त्रीभिः स्वतन्त्रतया न विभजनीयम्। अत एव मनुः—

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात्।
स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनुज्ञया ॥

इति। निर्हारो व्ययः। कस्मिंश्चिद्धने स्वातन्त्र्यमाह कात्यायनः—

ऊढया कन्यया सार्धं पत्युः पतिगृहेऽथवा।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम्।

सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥
भर्तृदत्ते स्थावरे तु न स्वातन्त्र्यम् ।
भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावराद्दते ।।

इति नारदोक्तः । भर्त्रादीनां स्त्रीधने स्वातन्त्र्याभावमाह स एव --

न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि त्वेकतरो ह्येषां स्त्रीधनं भक्षयेद् बलात् ।
सवृद्धिकं स दाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥
तदेव, यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्वकम् ।
मूलमेव स दाप्यः स्याद्यदा स धनवान् भवेत् ॥

मनुः-

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
तान् शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥
पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥

धृतः— भर्तृप्रभृतिदत्तस्तया धृतः । देवलः--

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ।
वृथा मोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।
पुत्रार्तिहरणे वापि स्त्रीधनं मोक्तुमर्हति ॥

वृत्तिर्जीवनार्थं पित्रादिदत्तं धनम् । लाभो वृद्धिः । मोक्षस्त्यागो दानम् । पुत्र॰ कुटुम्बोपलक्षकम् ।

याज्ञवल्क्यः--

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हति ॥

अत्र भर्तृग्रहणात् तद्भिन्नेन दुर्भिक्षाद्यापद्यपि स्त्रीधनं न ग्राह्यमित्युक्तम् । संप्रतिरोधकं-बन्धनम् । क्वचिदकामो दद्यादित्याह देवलः—

अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।

प्रीत्या निसृष्टमपि च पतिर्दाप्यश्च तद्बलात् ॥
ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्रीविभागं रिक्थिनस्तदा ॥

रिक्थिनः सकाशात् । इदं साध्वीपरम् । स्त्रीमरणोत्तरमन्वाधेयाख्यतद्धन-ग्रहणेऽधिकारिव्यवस्थामाह मनुः—

अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥

प्रजां विशिनष्टि स एव ।

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः ॥

यत्र दुहित्राद्यभावेन पुत्राणामेव साहित्येनाधिकारः प्राप्तस्तत्र तत्साहित्यम् । यत्र तु कन्यानामेवाधिकारः प्राप्तस्तत्र तत्साहित्यमनूद्यते । न तु कन्यापुत्रयोः परस्परमप्राप्तं साहित्यं विधीयते इति मिताक्षराशयः । परे त्वन्वाधेयभर्तृ-प्रीतिदत्तविषये कन्यापुत्रयोरपूर्वं साहित्यं विधीयत इत्याहुः । भगिनीषु विशेषमाह मनुः—

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् ॥

तदंशिनी पुत्रसमांशिनी । अप्रत्ताभावे सधवानां मातृसमोंऽशः ।

भगिन्यो बान्धवैः सार्धं विभजेरन् सभर्तृकाः ।

इति कात्यायनोक्तेः । दौहित्रीभ्योऽपि किंचिद्देयम् ।

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात् किंचित् प्रदेयं प्रीतिपूर्वकम् ॥

इति मनूक्तेः । यौतकं त्वनूढानामेव न पुत्राणाम् । तथा च मनुः—

मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव सः ।

यौतकं विवाहादिसमये पत्या सहैकासने प्राप्तं युतयोर्यौतकमिति निघण्टूक्ते-रिति मदनः । अन्वाधेयादिभिन्ने पूर्वोक्ते पारिभाषिके स्त्रीधने तु विशेषमाह गौतमः । ( गौ० ध० सू० २८–२२ ) स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति ब्राह्मणी कन्या तु सपत्नीमातुरपि धनं गृह्णीयात् इत्याह मनुः—

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन ।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥

वाकारश्चार्थे । तेन विभज्येति लभ्यते । ब्राह्मणीपदं समोत्तमजाति-कन्योपलक्षकमिति केचित् । मानं तत्र चिन्त्यम् । दुहितॄणामभावे दुहितृ-संततिः । 'मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः । इति नारदोक्तेः । भिन्न-

मातृकाणां दुहितॄणां दौहित्राणां च। 'अनेकपितृकाणां तु पितृतो भागकल्पना' ( या० २-१२० ) इति न्यायेनांशकल्पना। यत्तु याज्ञवल्क्यः—

मातुर्दुहितरः शेषमिति तत्राप्यन्वयपदं कन्यासंततिपरमिति केचित्। परे तु दुहित्रभावे पुत्रा एव गृह्णीयुः। नारदीये तदा मातुरेव परामर्शादित्याहुः। आचारसंवादी चायं पक्षः। शेषमृणादिति ऋणसमं तन्न्यूनं वा पुत्रा एव गृह्णीयुरिति सांप्रदायिकाः। दुहित्रादीनामभावे पुत्रपौत्राद्या गृह्णीयुः। अयं दुहित्रादीनां मातृधनाधिकारः पारिभाषिकस्त्रीधन एव। तेन पूर्वोक्तानि स्त्रीधनपदविशिष्टानि वचांसि पारिभाषिकस्त्रीधनपराण्येव। तेन पारिभाषिकातिरिक्तं स्त्रीधनं (मातृधनं) दुहितृसत्त्वेऽपि पुत्रादय एव लभेरन्। उभयविधसंतत्यभावे तु पारिभाषिकस्त्रीधनं प्रकृत्य विशेषमाह याज्ञवल्क्यः—

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः।

विवाहभेदेन बान्धवव्यवस्थामाह—

अप्रजः स्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।
दुहितॄणां प्रसूता चेत् शेषेषु पितृगामि तत्॥

ब्राह्मादिषु चतुर्ष्वपीति विप्रपरम्। तेषामेव तं प्रति धर्म्यत्वात्। यस्य तु क्षत्रियादेर्गान्धर्वोऽपि धर्म्यस्तस्य तदूढाधनमपि भर्तुरेव। तथा च मनुः—

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्।
अतीतायामप्रजसि भर्तुरेव तदिष्यते।
यत्त्वस्यै स्याद्धनं दत्तं विवाहेष्वासुरादिषु।
अतीतायामप्रजसि मातापित्रोस्तदिष्यते॥

ब्राह्मादिविवाहेषु भर्तुरभाव आसुरादिषु च पित्रोरभावे पारिभाषिकस्त्रीधनेऽधिकारिण आह बृहस्पतिः—

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः॥
यदासामौरसो न स्यात् सुतो दौहित्र एव वा।
तत्सुतो वा धनं तासां स्वस्त्रीयाद्याः समाप्नुयुः॥

दुहितृदौहित्र्योरप्यभावोऽत्र बोध्यः। तदभाव एवौरसदौहित्रयोरधिकारात्। आसुरादिविवाहेषु बन्धुदत्तेषु कात्यायनः—

बन्धुदत्तं तु बन्धूनामभावे पुत्रगामि तत्।

शुल्कविषये तु गौतमः—' भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः। ' इति। यत्तु शङ्खः—शुल्कं च स्वयं वोढेति तद्विवाहात्प्राक् मृतायां बोध्यम्। अत्र विशेषमाह याज्ञवल्क्यः—

मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् ।

पूर्वं दत्तं मृतायां कन्यायां स्वस्य तस्याः पितुश्च व्ययादवशिष्टं भर्ता गृह्णीयादित्यर्थः । क्वचिद्विशेषमाह बौधायनः—

रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः समम् ।
तदभावे तु तन्मातुस्तदभावे पितुर्भवेत् । इति ।

इदं विवाहात् प्राङ् मृतायां वाग्दानकालीनमातामहादिदत्तालंकारादिविषयमिति साम्प्रदायिकाः । स्त्रीधनविषये मिताक्षराकृन्मतेऽयं विशेषो यत्तैः स्त्रीधनमिति पदं यौगिकमेव गृह्यते तेन स्त्रियाः धनम्—स्त्रीधनम्- इति विग्रहेण येन केनाप्युपधिना स्त्रिया लब्धं स्त्रीधनमित्यर्थस्तत्संमतः । न च तैः पूर्वोक्तं पारिभाषिकं तदङ्गीक्रियते । तथा च मिताक्षराकृद्विज्ञानेश्वरस्वामिनः स्त्रीविषये करुणामयबुद्ध्याऽऽलोचयन्तीति वक्तुं शक्यम् । तथा च याज्ञवल्क्यदायभागप्रकरणे-

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ १४३ ॥

इत्यस्य श्लोकस्य टीकायां " स्त्रीधनशब्दश्च यौगिको न पारिभाषिको योगसंभवे परिभाषाया अयुक्तत्वात् " इति मिताक्षराग्रन्थः ।

इति पञ्चमव्याख्यानं समाप्तम् ।

---

# धर्मशास्त्रव्याख्यानमाला।

## षष्ठं व्याख्यानम्।

### दत्तकादिविषयं निर्दिश्याधुनातनविप्लवस्थले विद्वत्कर्तव्यम्।

दायभागविषयं व्याख्यानद्वयेन प्रतिपाद्याधुना (१) दत्तकविषये धर्मशास्त्रीयं मतं बोधयामि (२) तत्र च मनुयाज्ञवल्क्यशाकलवसिष्ठस्मृतिस्थानि निबन्धगतानि वचांसि च निर्दिश्य तत्सालक्षण्यवैलक्षण्ये तत्र तत्र दर्शयामि। (३) तदनु न्यायालयेष्वधुनातनेषु अत्यन्तं विपरीतः पन्था वैविध्येनाद्रियते तद्दर्शयामि। (४) ततश्च दत्तकविषये नित्यत्वकाम्यत्वादि पर्यालोचयामि। (५) अथ च यत्र हिंदुव्यवहारधर्मशास्त्रे विप्लवो भवति तत्र विद्वद्भिः किं कर्तव्यतामापद्यते। Hindu Law Research Committee इयं संसत् किं कार्यं विदधाति तन्मीमांसयित्वा तदनुसरणमेव श्रेयो वेति विचारपदवीमानेष्यामि।

१.२ पित्रर्णापकरणार्थं पुत्रप्रतिग्रह आवश्यकः। एवंभूतः सुतो दत्तकः। मनुः—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।<br>
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः॥

— मनु० ९-१६८.

वाशब्दान्मात्रभावे पितैव दद्यात्, पित्रभावे मातैव दद्यात्, उभयसत्त्वे तूभावपि इति मदनः। आपद्ग्रहणादनापदि न देयः। सदृशं गुणकुलादिभिर्न जात्या। अतः क्षत्रियादिरपि विप्रादेर्दत्तको भवतीति मेधातिथिः। सदृशं जात्येति। कुल्लूकभट्टः। युक्तं चैतत्। याज्ञवल्क्येन- 'औरसो धर्मपत्नीज' इति द्वादशापि पुत्रानुपक्रम्य—

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः।

इत्युपसंहारात्। विज्ञानेश्वरोऽप्येवम्। ज्येष्ठो न देय इत्ययमपि निषेधो दातुरेव न प्रतिगृहीतुः। दत्तकश्च पुमानेव भवति न कन्या। 'स ज्ञेयो दत्त्रिमः सुतः' इति संज्ञासंज्ञिसंबन्धबोधकवाक्यगतेन 'स' इति सर्वनाम्ना मातापितृकृतप्रीतिजलगुणकापार्ज्ञिमत्तकदानकर्मीभूतसजातीयपुंस एव- अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत - इति तच्छब्देनाष्टवर्षब्राह्मण्यपुंस्त्वोपनयनादिसंस्कृतस्यैव परामर्शात्।

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम् ।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥

इति शौनकवाक्यैः पुत्रप्रतिग्रहविधिरुक्तः । पूर्वोक्तशौनकवाक्येषु कानिचिच्छास्त्रीयविचारमर्हन्ति तेषां निर्देशः—

वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतम् ।
नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ॥
ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ।
तदभावेऽसापिण्डो वा अन्यत्र तु न कारयेत् ॥
क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमोऽपि वा ।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ॥
सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः ।
दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते ॥
नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन ।
बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥

छायावहं – सदृशम् । अस्यैव पदस्य सामर्थ्याद्यः प्रतिगृहीतुः पुत्रः संभवति गोत्रादिवैपरीत्याप्रतिबन्धकत्वादित्यादिः कैश्चिदतिदूरान्वितोऽर्थः संपादितः स त्याज्यः। आतिक्लिष्टत्वात् । सदृशो नाम गुणादिभिः, वयोऽवस्थादिभिश्चेत्यनेनैव संतोष्टव्यम् । पुत्रप्रतिग्रहबोधकानि वचांसि–

वसिष्ठः– 'शुक्रशोणितसंभवः पुत्रो मातापितृनिमित्तकः ।
तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः ॥

'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणी यः पुत्री यज्वा ब्रह्मचारी च । इति श्रुतिः । अन्यत्र—

अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च ॥

वसिष्ठः–

अनन्ताः पुत्रिणो लोका नापुत्रस्य लोकोऽस्ति । ………… न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषाम् । न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः । पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयात, संदेहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् । विज्ञायते हि एकेन बहूंस्त्रायत इति । तस्मिंश्चेत् प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद् दत्तकः ।

शौनकः—

दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयसुतः क्वचित् ॥

दत्तकचन्द्रिकायां शौनकः—

ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेत् ॥
दौहित्रो भागिनेयश्च शूद्राणां वापि दाप्यते ।

दत्तकमीमांसायां शाकलः—

सपिण्डापत्यकं चैव सगोत्रजमथापि वा ।
अपुत्रको द्विजो यस्मात् पुत्रत्वे परिकल्पयेत ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।
दौहित्रं भागिनेयं च मातृष्वसृसुतं विना ।

व्यवहारमयूखे शौनकः—

सर्वेषां चैव वर्णानां ज्ञातिष्वेव न चान्यतः ।
दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते ॥

यमः—

दौहित्रे भ्रातृपुत्रे च होमादिनियमो न हि ।
वाग्दानादेव तत्सिद्धिरित्याह भगवान् यमः ॥

समंत्रकहोमे शूद्रस्यानाधिकारात् पुत्रप्रतिग्रहः शूद्रेण न कर्तव्य इति केचित् तन्न, समन्त्रहोमस्य विप्रद्वारा करणेन कार्यसिद्धेः ।

उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् ।
विप्रैः संपादितं यस्य संपन्नं तस्य तद्भवेत् ॥

इति पराशरोक्तेः । अयं शूद्रार्थे कृतो होमो विप्रे दोषमुत्पादयति शूद्रे तु साद्गुण्यमावहति । स्त्रिया अपि शूद्रवदधिकारः । 'स्त्रीशूद्राश्च सधर्माणः' इति वासिष्ठात् । भर्त्रनुज्ञा तु सधवाया एव दृष्टार्थत्वात् । विधवायास्तु तां विनापि पितुः, तदभावे ज्ञातीनामाज्ञया भवति । याज्ञवल्क्येनावस्थाविशेष एव पारतन्त्र्यमुक्तम् । अतो यस्यामवस्थायां भर्त्रनुज्ञा प्राप्ता सैवात्रानूद्यते न त्वपूर्वा विधीयते । अतो विधवाया भर्तुरनुज्ञां विनाप्यधिकारः। दूरबान्धवापेक्षया संनिहितबान्धवो दत्तको ग्राह्यः। तत्रापि भ्रातृपुत्रो मुख्यः।

भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इति मनूक्तेः । दत्तको येन गोत्रेण संस्कृतस्तद्गोत्रं न जहाति ।

अयं च दत्तको द्विविधः केवलो द्व्यामुष्यायणश्च। संविदं विना दत्त आद्यः। आवयोरसाविति संविदा दत्तस्त्वन्त्यः। तत्राद्यः प्रतिगृहीतुरेवौर्ध्वदेहिकश्राद्धादि कुर्यात्। पुत्रशब्देन सर्वं पुत्रकार्यं लक्षयित्वा तत्प्रयोजकमदृष्टं भाव्यमंगीकर्तव्यम्। अतः प्रतिगृहीतृकुले पुत्रपित्रादिसंबन्धविशेषप्रयुक्तानि कार्याणि प्रवर्तन्ते। अत एवाह मनुः—

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥

दत्त्रिमः केवलः। द्व्यामुष्यायणस्य तु गोत्रादिकमनुवर्तते। एवं च केवले गोत्ररिक्थपिण्डस्वधापदैर्जनकादीनां पिण्डसंबन्धप्रयुक्तं कार्यमात्रं लक्षयित्वा तन्निवृत्तिरुच्यते। तेन सोदरपितृव्यादिसंबन्धनिवृत्तिरपि सिद्धा भवति। अतः केवलदत्तकजन्यः पुत्रोऽपि पितुः सपिण्डीकरणपार्वणश्राद्धादि प्रतिगृहीत्रैव सह कुर्यात्। एवं तत्पुत्रोऽपि। द्व्यामुष्यायणानुपक्रम्य कात्यायनः 'अथ यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युरथ यद्युभयोर्न स्यात् उभाभ्यां दद्युरेकस्मिन् श्राद्धे पृथगुद्दिश्य द्वावनुकीर्तयेत् प्रतिगृहीतारं चोत्पादयितारं चातृतीयात्पुरुषात्' इति द्व्यामुष्यायणपरम्। तेन द्व्यामुष्यायणो जनकस्य प्रतिगृहीतुर्वा पुत्रान्तरासत्त्वे तस्मै पिण्डं दद्यात् रिक्थं च गृह्णीयात्। न तत्सत्त्वे। यदा तूभयोरप्यौरसाः सन्ति तदा कस्मा अपि न दद्यात्। प्रतिगृहीतौरसांशस्य च चतुर्थं भागं हरेत्। यदा तूभयोः पुत्राभावस्तदा 'एकस्मिन् श्राद्धे' इत्याद्युक्तप्रकारेणोभयोरप्येकमेव श्राद्धं कुर्यात्। हेमाद्रौ कार्ष्णाजिनिना यदुक्तं तस्यायमर्थः— द्व्यामुष्यायणदत्तकादयो जनकप्रतिगृहीत्रोः कुले मृतानां स्ववर्गैस्तत्पित्रादिभिः सह सपिण्डीकरणं कुर्युः। दत्तकादिपुत्रास्तु तेषां जनकप्रतिगृहीतृभ्यां सह कुर्युः। तत्पुत्रा अपि स्वपितरं दत्तकेन पितामहेन तज्जनकेन प्रपितामहेन चतुर्थे पुरुषे तत्प्रपौत्रे छन्दः इच्छा प्रतिगृहीतारमुच्चारयेन्न वेति जनकं तूच्चारयेदेव साधारणेष्वमावास्यादिकालेषु जनकप्रतिगृहीतृवर्गिणां श्राद्धं कार्यं मृताहे त्वेकमेवोद्दिश्यैकोद्दिष्टं श्राद्धं कुर्यादिति। द्व्यामुष्यायणकानां गोत्रद्वयेऽप्यनुद्वाहः। अत एव प्रवराध्याये

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः।
गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा॥ इति।

एतेन गोत्रद्वयं द्व्यामुष्यायणस्योक्तं मानवीयेन च जनकगोत्रनिवृत्तिरुक्तेति विरोधः केवलद्व्यामुष्यायणभेदेनैव परिहरणीयः। तेन सिद्धत्येव केवलोऽपि दत्तकः। अत एव शूरेण कुन्तिभोजाय दत्त्रिमत्वेन दत्तायाः कुन्त्याः सुतस्यार्जुनस्य शूरपुत्रवसुदेवदुहितुः सुभद्रायाः मनुवचनेन सापिण्ड्यनिवृत्तिमुक्त्वाऽस्य गौतमीयस्य बीजसंतानजाया अपि निषेधमात्रपर-

त्वमेव चोक्त्वाऽर्जुनेन सुभद्रा अपरिणेयेत्याशङ्क्य वार्तिकोक्तं संबन्धव्यवधानकल्पनाख्यं समाधानमाह भट्टसोमेश्वरः। अर्जुनसुभद्रयोर्गान्धर्वविवाह इत्यपि विचार्यम्। अत्र च केवलदत्तकस्य पालकपितृकुले साप्तपौरुषं मातृकुले च पाञ्चपौरुषं सापिण्ड्यम्। कानिचित्सापिण्ड्याभावबोधकानि वृद्धगौतमबृहन्मनुनारदवचनानि तान्यनाकराण्येव। यस्तु साण्डिण्यनिर्णये केषांचिन्मान्यानां लेखः – जनकगोत्रेणोपनयनादिसंस्कृतस्य तु जनककुले पितृतो मातृतश्च पाञ्चपौरुषं साप्तपौरुषं च साण्डिण्यं प्रतिगहीतुः कुले त्रिपुरुषं प्रतिग्रहीतरि पितृत्वप्रयोजकस्योत्पादकत्वस्योपनेतृत्वस्य चाभावात् प्रतिगृहीतृगोत्रेण संस्कृतस्य तु प्रतिगृहीत्रादिभिरेव साप्तपौरुषं पाञ्चपौरुषं चेति तस्य मूलं न विद्मः। कालिकापुराणवाक्यानामनाकरत्वात्। एवं च प्रतिगृहीतृगोत्रेणोपनयाद्यभावेऽपि केवलदत्तके जनकगोत्रनिवृत्तिस्तत्साण्डिण्यनिवृत्तिश्च सिध्यति भवति च प्रतिगृहीत्रादिभिः साण्डिण्यम्। इति। कन्याया दत्तकत्वेन जनकगोत्रविरुद्धगोत्रे विवाहः कर्तव्य इति केषांचिच्छिष्टानामधुनातन आचारो निर्मूलः। वदन्ति च केचिदयमाचारो धर्मपीठसंमत इति। तथाप्यशास्त्रीयायाः पूर्वोक्तसंमतेरस्वीकार्यत्वमेव श्रेय इति शास्त्रीयः पन्था इति शम्।

अत्रेदमवश्यं मीमांसनीयम्। पुत्रप्रतिग्रहविधिर्नित्यः काम्यो वा। स च न नित्यः किन्तु काम्यः। यत् अकृते प्रत्यवायसाधकं कृते फलाभावसाधकं तन्नित्यं पुत्रप्रतिग्रहाभावे दोषस्तु कुत्रापि नोक्तः। न च वक्तव्यं 'जायमानो वै' इत्यादिश्रुत्या पुत्रप्रतिग्रहस्यर्णापाकरणार्थमावश्यकतेति। किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः इत्यादिश्रुत्यात्मलोककामिनां प्रजाफलस्यानुपयोगात्। एवं च पिण्डक्रियाहेतोर्नामसंकीर्तनाय चेत्यनेन फलद्वयोद्देशेन विधानात् काम्यत्वमेव पुत्रप्रतिग्रहस्य। अधुना त्वेवमनुभूयते यत्प्रतिगृहीतपुत्रा गृहित्रीर्मातॄर्निन्दन्ति पीडयन्ति च। तेनेदं वक्तुं शक्यं पुत्रप्रतिग्रहसंस्कारो धर्मशास्त्रानुसारं नानायतिकः। स च कदाचित् काले रूढ्या परिगृहीतः यदा स रूढ्या परिगृहीतस्तदानीं तेन बहवो लाभा अनुभूयन्ते स्म। अधुना तु तेन न किमपि लभ्यते। किंतु बहुधा क्षतिरेव। पुरातनकालेऽधुनातनवत् पुत्रप्रतिग्रहप्रचारो नासीत्। मनुयाज्ञवल्क्यादिस्मृतिषूपलभ्यमानाः प्रतिग्रहव्यवस्थाः ( केन सुतो ग्राह्यः, कथं ग्राह्यः, एक एव चेन्न ग्राह्यः, ज्येष्ठो न ग्राह्य इत्यादिकाः) वेदे न सन्ति। प्रत्युत स्मृतिकृद्विरोधिका वैदिकी रूढिर्दृश्यते तथा हि पुत्राणां शतेऽनुकूलमतानुयामिनि जीवति विश्वामित्रः शुनःशेपं पुत्रत्वेनोररीचकारेति ऋग्वेदे। यजुर्वेदेऽपि अत्रिः पुत्राणां शतमपि महर्षय और्वाय प्रददौ। कन्याप्रतिग्रहनिषेधोऽपि स्मृतिकृतां कुन्तिभोजेन राज्ञा कुन्त्या धर्ममातुर्दत्तकविधिना प्रतिग्रहादपाकृतः। पूर्वं द्वाद-

शानां पुत्राणां स्थितेर्दत्तकस्य तादृशं माहात्म्यं नासीत् । विना पुत्रं पिण्ड-दानमशक्यमतः पुत्रप्रतिग्रहोऽपेक्ष्यत इत्यपि वक्तुमशक्यं स्वयमपि जीवता पुरुषेण स्वपिण्डदानस्य शास्त्रे विहितत्वात् । द्वितीयश्च हेतुः— नामसंकीर्तनाय चेति । नामसंकीर्तनमावश्यकं नेति तत्तत्पुरुषमत्यधीनम् । यदि नामसंकीर्तनार्थं पुत्रः स्वीक्रियते तर्हि शिवभूपवत्सोऽस्तु । स च स्वयमेव तादृशपराक्रमी विलसेत् महाभागनाना फडणवीस' इत्येतैर्दत्तकत्वेन पुत्रः स्वीकृतः किं तेषां तत्सुतेन यशस आधिक्यमिति सुधीभिरूह्यम् । इदमेव पुत्रप्रतिग्रहस्यावश्यकताबोधकं यदि स्वधनेन सह स्यात् किंचिदावश्यकं राजकीयादिकार्यं तर्हि तन्निर्वोढुं पुत्रस्यावश्यकता ।

व्याख्याकृतां निबन्धकृतां च मतिविलासः ।

समानस्यैव वचनस्यालम्बेन तत्तद्व्याख्याकृतो विविधार्थान् प्रतिपादयन्ति। अत्रार्थ उदाहरणम्—न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञाना-द्भर्तुः। अत्र मिथिलास्थपण्डिता यथाश्रुतमक्षरार्थमादृत्य विधवा पुत्रप्रतिग्रहे नाधिकारिणीति वदन्ति। मद्रासव्यवहारो मोहमयीवंगमध्यस्थः। यतो वंगेषु पत्युराज्ञापेक्ष्यते। मोहमयीमहाराष्ट्रेषु 'अप्रतिषिद्धमनुमतं भवति' इति न्यायेन निषेधाभावे संमतिरस्तीति स्वीकार्यमेव । किंतु मद्रास-प्रान्ते पत्यौ परलोकं गते पत्न्यां तस्याधिकाराभावात् तस्यानुज्ञा प्रति-बन्धो वा न प्रयोजकः । मृतपतिबान्धवैर्दत्तकविषयेऽनुज्ञाप्यं न वेति तदिच्छा । एवं च मद्रासस्थद्राविडाः पतिशब्दमुपलक्षणरूपमङ्गीकुर्वन्ति । भर्ता पतिः' इत्यादिशब्दा रक्षणकारिबोधकाः । ततश्च पत्यौ मृते तद्बान्धवानां पालकत्वात्तदनुज्ञया दत्तकस्वीकारः । प्रामाण्यं स्मृतिवचसामप्रतिहतं तथापि निबन्धकृतो व्याख्याकृतश्च स्वसमयस्थमाचारं शास्त्रेण समन्वितं कर्तुं यथाकथमपि प्रयस्यन्ति । एवं च स्मृतिकृतामर्थाः स्वाचारानुरोधात्परिवर्तयन्ति ते ते आचार्या व्याख्यातारो निबन्धकृतश्च । भागिनेय-दौहित्रयोर्विचारः—

सपिण्डो दत्तकत्वेन स्वीकार्यः । तत्र दुहिता सपिण्डा भवति तेन दौहित्रोऽप्यसपिण्डापेक्षया संनिकृष्टतरः । अनया रीत्या सापिण्ड्यस्य प्रयोजकत्वे दौहित्रभागिनेययोर्दत्तकत्वेन स्वीकारोऽवश्यंभावी । पूर्वोक्त-शौनकवचसः प्रक्षिप्तत्वाभावेऽपि 'ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्' अत्र भागिनेयस्यैव निषेधो न दौहित्रस्य । अन्येऽसगोत्रा न ग्राह्याः। किंतु दौहित्रभागिनेयौ ग्राह्यौ । एवं यद्वचनमालम्ब्यायं वादो विनिर्गतस्तद्वचनमेव न विश्वास्यं कर्नाटकेषु तु विशेषतो दौहित्रमेव प्रतिगृह्णन्ति । बंगाल रॉयल एशियाटिक सोसायटीस्थलिखितशौनकस्मृतिपुस्तके

'दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते' इति पाठः। दत्तकदीधितौ तु 'दौहित्रो भागिनेयश्च शूद्राणां वापि दीयते' इति पाठः किंतु पूर्वोक्तलिखितपुस्तके त्रैवर्णिकानां भागिनेयस्य दत्तकत्त्वेन ग्रहणे प्रतिबन्धकमुत्तरार्धं नास्ति। एवं चायमर्थः। त्रैवर्णिकैर्दौहित्रभागिनेयौ दत्तकत्त्वेन दातुं प्रतिगृहीतुं च योग्यौ तथैव शूद्रस्यापीत्यपिशब्देन बोध्यम्। दत्तकमीमांसायामुद्धृतं शाकलवचनमित्थम्।

समानगोत्रजाभावे पालयेदन्यगोत्रजम्।
दौहित्रं भागिनेयं च मातृष्वसृसुतं विना॥

अन्येष्वसगोत्रीयेष्वेषु च त्रिषु महान् भेदः। अन्यापेक्षयैते समीपस्था अतः स्वीकार्याः। केचित्तु 'पुत्रच्छायावहमित्यनेन प्रकृतसंबन्धाभावे यज्जनन्या सार्कं विवाहः कर्तुं शक्येतेति बोध्यतेऽत एतेषां त्रयाणां ग्रहणे भगिन्या दुहित्रा मातृष्वस्रा च भार्यात्विसंबन्धो भवेदतस्त्याज्या एत इति वदन्ति। तन्मन्दम्। पुत्रच्छायावहमित्यस्यार्थो वयसा कनीयस्त्वमित्येव ग्राह्यः। अधिकार्थस्य लक्षणादिघटितत्वात्। एवं स्वपत्नीसंबन्धो यत्र घटेत तस्या एव सुतो ग्राह्य इति यद्यर्थस्तर्हि कनिष्ठभ्रातुर्दत्तकत्वेन स्वीकारो न स्यात्। तत्र च स्वीयजननीसंबन्धस्य संभाव्यमानत्वात्।

आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः।
चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते।

इतीमानि कालिकापुराणवचांसि निर्मूलानि तेनोपनीतोऽपि विवाहितोऽपि च दत्तकत्वेन स्वीकारार्हः। उपनीतस्य ह्यामुष्यायणत्वमित्यादि सापिण्ड्यदीपिकाकर्तुर्मतं पूर्वमेव खण्डितम्। अधुना न्यायालयेषु प्रतिग्रहविधिरयं जातो न वेति तत्सत्यताविषये बहवो विवादाः प्रादुर्भवन्ति परं ते धर्मशास्त्रीयवचनगतसर्वपदानुसारमनुष्ठानाभावात् प्रादुर्भवन्तीति ब्रूमः। राज्ञि राजपुरुषे वा सति ससाक्षिकं पुत्रप्रतिग्रहो लेखपुरःसरं वा कर्तव्यस्तेनेदृशा विवादा न संभवेयुः।

अधुनाऽनंशेषु स्नुषाविषये किंचिदुच्यते। सांप्रतं ये श्रीलास्तेषां पुत्रेभ्यः कन्यानां प्रदानं क्रियते जनैस्तत्र चेयं मतिः कन्यादातॄणां प्रभवति यदियमस्मद्दुहिता विशेषतः सुखभाक् स्यात्। अत एव स्वसामर्थ्याद्धिकमपि शुल्कं तन्निमित्तं वरपित्रे दीयते। ततश्च दौर्भाग्यवशाद्यदि

१ 'पुत्रच्छायावहम्' इत्यस्य तत्र नियोगादिना स्वयमुत्पादनयोग्यत्वम्' इति नन्दपण्डितार्थः साहसमात्रम्। अत्यन्तं शास्त्रविरुद्धत्वात्।

तत्पतिर्म्रियेत तर्हि सा केवलमन्नवस्त्रभाक्। सा श्वशुरसेवामनुतिष्ठति। स च तां स्वसेविनीमनुमनुते। यदि न तस्य तादृशी मतिस्तर्हि सा तदपि न लभेत। इदं तु न युक्तियुक्तम्। यत इयं बहुधनव्ययेन श्वशुरगृहे दत्ता। पुरा तु ब्राह्मविवाहे 'यथाशक्ति कन्यालंकृत्य दीयते यत्र स ब्राह्मो विवाहः' इति लक्षणलक्षिते पितृशक्त्यनुरूपमलंकारादि दीयते स्मेति युक्तं तदा श्वशुरेच्छानुवर्तित्वम्। किं च यौतकत्वेन तेषामलंकाराणां दानस्य सत्त्वात् पारिभाषिकस्त्रीधने तदन्तर्भावात् तत्पारिभाषिके स्त्रीधनात्मके शुल्के नान्तर्भवति। अधुना तु श्वशुरेभ्यो दीयन्तेऽलंकारास्तेन। एवं चोभयथापि विधवानां स्नुषाणामापत्तिः। यदि कन्यापितरो गुर्जरवत् कन्याधनं तदीयत्वेन वृद्धिं प्रापयेयुस्तर्हि तच्छ्रेयसे स्यात्।

मिताक्षराकृत्प्रभृतयो व्याख्यातारो निबन्धकृतश्च स्मृतिचन्द्रिकाप्रणेतृदेवण्णभट्टप्रभृतयः किमिति स्मृतिवाक्यार्थं विपरिवर्तयन्ति तदधुना विमृशामः। तत्र त्रयः कल्पाः प्रभवन्ति १ सर्वस्मृतिसमन्वयग्रहग्रहिलताया २ स्वसमयोपयोगिव्यवहारानुकूलकारित्वम्। ३ निबन्धान्तरखण्डनाग्रहो यदर्थं मीमांसाधिकरणलापनचातुरी वा। तत्र प्रथमपक्षस्य खण्डनमकारि प्रथमे व्याख्याने। तथाहि यदि गुणोपसंहारनिमित्तं समन्वयार्थं च स्मृतिसमुच्चयस्तर्हि किं सर्वासां स्मृतीनां, कतिपयानां स्वेष्टानां वेति पक्षत्रयमुपकल्प्य तदसंभवबोधनेन खण्डितम्। द्वितीयः पक्षः स्वसमयोपयोगिराजव्यवहारसाधनं तच्च यया यया प्रक्रियया संसाध्यते तामेव प्रक्रियां साध्वीं मत्वा विवरणं व्याख्यानिबन्धकृद्भिराद्रियते। इदं तु न दोषाय। यथा मनुस्मृतौ मौर्यसमयस्थो व्यवहारः संसाधितः शातवाहनसमयस्थश्च याज्ञवल्कीये, स्वातन्त्र्येण तथैव निबन्धादिषु तत्तत्कालिकराजव्यवहारस्य संसाधनम्। अयमनयोर्विशेषः। यत् स्मृतिषु तपःसामर्थ्यादिना स्वातन्त्र्यात् तथा प्रणयनम्। निबन्धादिषु तु तादृशसामर्थ्याभावात् समन्वयं समीहितस्मृतिजन्यं संसाध्य तदानींतनराजकीयव्यवहारप्रतिपादनम्। अत्र च तत्संसाधनपारवश्येन समन्वीयमानस्मृतिपौर्वापर्यं नालोच्यते। इदमयुक्तिमत्। किं च भिन्नकालजनिबन्धानां खण्डनमपि गले पतितं तच्चानुष्ठीयते महता परिकरबन्धेन तत्रैव चोपयोज्यन्ते मीमांसान्यायाः। एतेषां मीमांसाधिकरणानां त्वीदृशी गतिर्यद्विभिन्नार्थकश्रुत्यर्थमुद्बोधयितुं प्रवृत्तानां तेषां विभिन्नार्थसाधकत्वमवश्यंभावि। तेन च परस्परविरोधेन प्रवर्तमानानामुभयेषामपि कार्यसिद्धिः। एवं च द्वितीय एव पक्षः। तत्संसाधक एव तृतीयः पक्षः। ईदृशी भवति निबन्धकृतां गतिर्यत् ते कदाचित् पाठान्तरमप्याद्रियन्ते

दौहित्रो भागिनेयश्च शूद्राणां वापि चेष्यते'

इत्यादिवत् । कदाचिद् दूरापेतमप्यर्थं व्याख्यान्ति । कानिचिद्विरुद्धवचनानि निर्मूलत्वेनोपेक्ष्यन्तेऽनुकूलानि समाश्रयन्ते च कल्पयित्वापि । किं वा कारणं न विद्मो निबन्धग्रन्थाः सर्वेऽप्येते न्यायनिर्णयार्थं न्यायालयं प्रविष्टाः स्मृत्यपेक्षयापि महत्तरं प्रामाण्यं भजन्ते च । एवमेतेषां ( निबन्धकृतां ) चातुर्यं दृष्ट्वा समालोच्य परिकल्प्य च युक्त्यन्तरं न्यायाधीशा हायकोर्टप्रिव्हीकौन्सिलस्था न्यायं निर्णयन्ति । यद्यपि ते स्मृतिनिबन्धादिविरुद्धं प्रतिपादयन्ति तथापि राजकीयसामर्थ्यात् तदेवाग्रे न्यायरूपं भवति तद्वशस्थैरल्पन्यायाधिपैस्तदेव प्रामाण्यकोटिमानीयते व्यवाह्रियते च तद्वदेव । भवन्ति चार्थिप्रत्यर्थिनो दण्डभाजः । अत्रैव विचारास्पदं सुधियामार्यशास्त्राभिमतिमताम् । अपि नामायं प्रवाह एवमेवाविरतमव्याघातं च प्रवर्तेत येन चार्यशास्त्रसंस्कारा अपनीता भवेयुरथ वा केवलशास्त्रैकदर्शिनां धर्मशास्त्रपारावारपारीणानां विदुषां संहतिः स्नेहबुद्ध्या राजालयं गत्वा बोधयेदेवं न्यायोऽन्यायपथमाटीकत इति तत्र द्वितीय एव पक्षः सुधीसंमतः स्यात् । तदर्थं भाव्यमेवैतादृश्या संसदा नातिचिरेण कालेन सह संगत्य । तत्र चापेक्ष्यन्ते नव्यप्राचीनव्यवहारशास्त्रकोविदा येन व्यवहारे स्यात् सौहित्यम् । अत्रार्थे प्रवर्तमानाऽस्ति काचित्संसत् । प्रयत्यते च तया सबहुमानमेतत्कार्यसंपादने मन्ये तयैव संसदा तत्तद्देशसभ्यद्वारा कुत्र देशेषु के विरुद्धा व्यवहारनया धर्मशास्त्रविहत्यै प्रभवन्ति तेषां सर्वेषां निर्देशं विधाय प्रभूतजनसमितिं संपाद्य पूर्वोक्तरीत्या राजकीयविधिनियममण्डले नियमानुसारमुपस्थातव्यम् । बोधनीयाश्च ते ते न्याया यथाशास्त्रम् । येंऽशविकलास्ते तस्मिन्नेवांशे याथातथ्यमापादनीयाः । सुगृहीतनामधेयमाडगांवकर, पाटकर, जयकर, अद्यतनाध्यक्षमहाभागसदृशा अधुना हिन्दु लॉ रिसर्च एँड रिफार्म समिर्ति समातिष्ठिपन् । यत्र च वेदशास्त्रसंपन्नसरस्वतीभूषणवामनशास्त्रिकिंजवडेकरसदृक्षाः प्राच्यविद्याकोविदा साहाय्यमाचरन्ति तस्याः संसदः समालम्बेन स्यात् कार्यसिद्धिरसंदेहामिति मन्ये तदर्थं च सर्वैः शास्त्रप्रेम्णा प्रवर्तनीयामिति प्रेष्ठश्रेष्ठसभास्तारमिश्रेषु साञ्जलिबन्धं विज्ञप्य विरमामि । ततः प्रागावश्यकं राजकीयाधिकारितत्प्रेरक– डॉ० श्रीपाद कृष्ण बेलवलकरप्रभृतीनामनुग्रहभरोद्वहनं करोमि । मया च मुष्टिंपचमतिना यदत्र निबद्धं तत्साध्वसाधु वेति विविच्य यथाप्रसङ्गं बोधनीयोऽहमिति संप्रार्थ्य जोषंभावं समाश्रयामि । इति शम् ।

इति षष्ठं व्याख्यानं समाप्तम् ॥

---

# CONCLUDING LECTURE

BY

RAO BAHADUR R. R. KALE, B. A., LL. B.

Presiding on the occasion of the concluding lecture of the series of 6 lectures on Hindu Civil Law arranged under the auspices of the Bhandarkar Oriental Research Institute, Poona, with special reference to the Dāyabhāga i. e. the principles of inheritance and succession, Rao Bahadur R. R. Kale, B A., LL. B., M. L. C., Advocate ( O. S. ) Satara, bringing the proceedings to a close observed as follows:—

Mahāmahopādhyāya Shridhar Shastri Pathak of the Deccan College has undoubtedly done a great service in bringing together various texts from the different Smṛtis and their Commentaries bearing on Hindu law of दायभाग and endeavoured to point out how in some respects the Judicial decisions of the British Courts have departed from the true import of the Dharma Shastra. He has also shown a critical faculty in discussing some of the points arising under Hindu Law. If such a use is made by old Shastris in their interpretation of the Law in the present changed times, the work of research and reform will be very much facilitated. It is creditable to the learned Shastri that he has frankly admitted the futility and impossibility of reconciling all the Smṛtis. At the present time much is talked about the Hindu Dharma ( rules of conduct ) governing the Hindu Society.

ध्रियते अनेन (लोकः) स धर्मः । तं शास्तीति धर्मशास्त्रम् ।

which means Dharma is that which holds the society together and Dharma Śāstra means the science which teaches the principles by which the society is to be governed. Manu has stated

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।

When therefore we have to consider about Dharma-Śāstra, we ought to look to the Smṛtis. Now these Smṛtis have undergone a change according to the circumstances from time to time as is clear from the verse

अन्ये कृतयुगे धर्माः त्रेताया द्वापरेऽपरे ।
अन्ये कलियुगे नृणाम् युगह्रासानुरूपतः ॥

and finally it is said in the Mahābhārata Vanaparva—

तर्कोऽप्रतिष्टः श्रुतयो विभिन्नाः ।
नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायाम् ।
महाजनो येन गतः स पन्थाः ॥

in the last verse Mahājana is to be interpreted as meaning great straightforward men ( महांश्चासौ जनश्च महाजनः ). Accordingly Smṛtis have necessarily varied according as the surroundings were changed. The Smṛti Books are thus not lasting authorities for all times invariable and immutable. They laid down different rules for different times and particular Smṛtis prevailed in particular ages—

कृते तु मानवा धर्माः त्रेतायां गौतमाः स्मृताः ।
द्वापरे शाङ्खलिखिताः कलौ पाराशराः स्मृताः ॥

What is called as the 'Sanātana Dharma' are the eternal verities of morality and religion which stand for all times and for all places. It is not relevant for our present purpose to undertake any exposition of these and therefore I shall turn to the Smārta Dharma or Dharma Śāstra.

A historical retrospect of the Smṛtis will go to show that this Dharma (rules of conduct) has undergone a change according to circumstances and the different authors of the Smṛtis and their commentaries and digests have evolved a reform suited to the times and our task should be to follow in their foot-steps. At present a controversy has arisen as to whether any new Smṛti should be prepared and if so by whom and in what manner. In my opinion the present Legislative Councils are the natural successors of the Smṛtikāras and it is they who ought to introduce the necessary changes suitable to the present trend of enlightened opinion; and in doing so they might take support from the old texts or extracts from commentaries. Laws are the collective wisdom of statesmen and leaders of enlightenad public opinion. From this point of view, if instead of one single individual laying down rules, a few leaders would after exchange of views formulate any rule of conduct that will assume the form of a Smṛti and will be a binding if passed in law. Jaimini, the propounder 'of

Codanā Lakṣaṇa Dharma' has said in 26th Sūtra of the 1st Section of the 1st Chapter

" संनियमात् प्रयोगसंनिकर्षः स्यात् "

and Mr. Dhaphatary of Nagapur has in his book of Dharma-rahasya adopted the same line of thought; he has shown by various quotations from the Śrutis and the Smṛtis that the present rules of conduct both in private life and in relation to Society must be governed by the opinions of selfless Statesmen and leaders of the present day.

There are more than 100 Smṛtis but 3 of them are the principal ones and they are Manu, Yājñavalkya and Parāśara in order of time. Each Smṛti is divided into 3 parts; one dealing with Ācāra, the 2nd with Vyavahāra and 3rd with Prāyaścitta. As regards the 1st, it has undergone a vast change according to the changed times and this is but natural. If we take for instance Varṇāśrama Dharma. In the 1st two Smṛtis, we find only 6 avocations prescribed for the Brāhmans viz. अध्ययन—अध्यापन दान-प्रतिग्रह यजन-याजन. To this Parāśara adds a seventh viz. Kṛṣi i. e. agriculture. So also his permitting of widow remarriage under the text

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चसु आपत्सु नारीणाम् पतिरन्यो विधियते ॥ १ ॥

is well known. At the present moment the question of removing untouchability has become a live issue. Now this is included in the Ācāra portion of the Dharma Śāstra and who will not say that it deserves an interpretation suited to the trend of enlightened public opinion and lay down a rule which will be in consonance with it. It is not our present purpose to discuss the Ācāra section of the Smṛti. We are on this occassion concerned with the chapter on Vyavahāra which formed the subject matter of the series of 6 lecures delivered in this Institute. This Vyavahāra Chapter covers a very wide field which it is impossible to traverse in the short time at my disposal. I therefore propose to confine myself to a few observations on the rights of women to property and its inheritance.

In vedic times the word Dampati showed equal rights of the husband and wife as being the two masters in a family. Whatever is acquired by one belongs to both, since Jaimini says

दम्पत्योः सहाधिकारात् and again दम्पत्योर्मध्यगंधनम्. So also in later times Yājñavalkya's text says पत्न्यः कार्याः समांशकाः and Vijñāneśvara's Commentary on it expounds it thus:—" when a division takes place ( during the life time of the husband if he makes it, or after his death when his sons make it ), a wife is entitled to get a share equal to that of a son. In later times however when the meaning of the word 'share' was limited to a portion sufficient for maintenance, that this was a wrong interpretation was shown by Vijñāneśvara by stressing the word सम ( equal ). Similarly that the wife becomes the heir of her husband in the absence of a son is the clear text whether the husband died as a member of a divided or undivided family, but the interpretation that the wife becomes an heir only if the husband died a divided member was a limitation put upon her right which is contrary to the original theory of joint and equal rights of husband and wife. If the husband and wife are both equal co-parceners, the wife if she survives her husband should be the sole surviving co-parcener, or if there are more co-parceners, one of the co-parceners. The following Text of Bṛhaspati lays down the correct status and rights of a woman—

पूर्वं प्रमीताग्निहोत्रं मृते भर्तरि तद्धनम् ।
विन्देत्पतिव्रता नारीः धर्म एष सनातनः ॥

So also the वृद्धमनु has a similar text.

अपुत्राशयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात् तात्पिण्डं कृत्स्नमंशं लभेत च ॥

So the conclusion is that a wife should get an equal share if the husband makes partition among his sons and of course she should get as she does get at present an equal share when the sons make among themselves a partition. Further even if the husband died an undivided member, the wife should get his share after his death as she is the one survivor out of the two along with husband's other co-parceners. After having seen that a widow should inherit her husband's share both when the husband dies as a member of an undivided or divided family, the next question that arises as to her rights in the property so inherited. The limitation which has come to be placed on her proprietorship that she should have only a life estate in it is not reasonable. It seems to have been based on a narrow interpreta-

tion of a text in the Kātyāyana Smṛti. Vijñāneśvara achieved a great step in the progress of women's rights by including in the word 'आद्य' ( in the Yājñavalkya's definition of what constitutes Strīdhana ) the property of a widow obtained by inheritance, thus making it, her Strīdhana proper but the restriction on such Strīdhana that she takes only a life interest in it seems perhaps due to a desire on his part to disarm the opposition then prevailing to women's rights generally. The Author of Dāyabhāga propounded the theory of a widow getting her husband's share in undivided property after her husband's death on the ground of her being an equal co-parcener in the joint property of her husband and other Members of her family; but he put a limitation that the widow should have only a life interest so that other coparceners should take the estate as reversioners after her death. The same compromise seems to have been effected by Vijñāneśvara when he included the inherited property of a widow in her Strīdhana but limited her enjoyment of it for her life. If at the present time we proceed to accept the interpretation of the author of Dāyabhāga that a separation in interest should exist even when the family is joint and also apply it to Mitākṣara School, we shall have achieved a great step in advance in regard to the injustice to widows in an undivided family.

In short the time has now come in the evolution of widow's rights to make them absolute just as daughters and sisters have absolute rights to property inherited by them. Thus the evolution of women's rights which was begun by Yājñavalkya and his commentator Vijñāneśvara should now be completed in the manner above indicated ; such a process will be in consonance with the tradition of women's rights as they existed in Vedic Times and for this, further support may be found in the following text of the Smṛti of Bṛhaspati :—

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ॥ १ ॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धे शरीरेऽर्धे कथं अन्यः समाप्नुयात् ॥ २ ॥
सकुल्यैर्विद्यमानैस्तु पितृमातृसमानाभिः ।
असुतस्य प्रमीतस्य पत्नीतद्भागहारिणी ॥ ३ ॥

Thus a resume of the past history of the women's rights will show how they were affected from time to time. In Vedic Times

women enjoyed equal rights. Then there was a re-action and again a reform which has to be borne in mind in order to adopt further line of progress to restore women to their original status. In the race of progress all over the world if we remain static, we shall not be able to hold our own. If we want to keep alive our Dharma Śāstra, we must bring about the necessary progress and reform in it by resorting to the traditional method of keeping before our eyes our Sanskrit and spiritual ideals and I am convinced that in this way the Dharma Śāstra will be a living force. We cannot ignore the law of the survival of the fittest. It will not therefore be possible to stick to existing customs all and sundry. It is futile to ask people to do so. What is the use of raising the slogan 'religion in danger', every time, as for instance in the matter of touching the so-called depressed classes. Several of the old customs and rules and usages have already died out. It is no use crying that each Varṇa should observe its own avocations. A change has already taken place as it is must in course of time. It is impossible to resist the force of the waves of changing times. Of what use is it therefore to preach that we should stick to all the externals of religion; but we must look to the spirit and act accordingly. I would conclude by quoting a Śloka in the Bhagavat Gītā together with its interpretation by Śrī Jñāneśvara since in my opinion it furnishes an excellent guide as to how all educated and reasonably minded persons should act at this critical juncture in our society.

" यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः "

"जरी वेदे बहुत बोलिले। विविध भेद सूचविले ।
तऱ्ही आपण हित आपुलें । तोंचि घेपें ।।
जैसा उदयता गभस्ती । अशेषही मार्ग दिसती ।
परितेतुलेहि काय चालिजती । सांगे मज ।।
कां उदकमय सकळ । जरी जाहले महीतळा
तरी घेपें केवळ । आर्ताचि जोगें ।।
तैसे ज्ञानी जे होती । ते वेदार्थातें विवरिती "
मग अपेक्षित तें स्वीकारिती । शाश्वत जें ।।

—श्रीज्ञानेश्वर

# चरमदिनव्याख्यानावसाने कार्याध्यक्षैः कृतमाभारप्रदर्शनादिकम् ।

---

अयि श्रेष्ठाः । अध्यक्षमहाशयानां समारोपात्मकं भाषणं विहायापरः सर्वो व्याख्यानविषयकः कार्यक्रम एतावत्पर्यन्तं संपूर्णः संजात एव । किंतु समारोपात्पूर्वमवश्यं विधेयं किमप्यन्यत्सुमहत् कार्यमवशिष्टं वर्तते । तन्निमित्ता ममात्र प्रवृत्तिः । प्रथमव्याख्यानदिने मया निवेदितमेव यथेयं व्याख्यानश्रेणिः शिक्षणाधिपतीनामाज्ञानुसारमेतस्मिन् प्राच्यविद्यासंशोधनमन्दिरे दीयते । तदर्थं च व्याख्यातृवर्येभ्यः पण्डितप्रवरेभ्यः पाठकोपाह्वश्रीधरशास्त्रिभ्यो दातव्यत्वेन नियमितं रूप्यकशतद्वयपरिमितं पारितोषिकमद्यैव अन्तिमव्याख्यानसमाप्त्यनन्तरं दातव्यमिति अधिकृदनुशासनम् । एतादृशे संकटप्रचुरेऽपि समये अस्माकं प्राचीनशास्त्राणामुत्तेजनार्थं धर्मतः देशतः संस्कृतितश्च विभिन्नानामपि राजदण्डधारिणामेतादृशी सुश्लाघ्या प्रवृत्तिः कस्य हृदये संतोषं नावहेन्नाम । शिक्षणाधिकारिणां प्रेरणया दीयमानेयं तृतीया व्याख्यानश्रेणिः । एतत्पूर्वं एका वटोदरस्थेनैकेन पण्डितेन अहमदाबादस्थगुर्जरविद्यालये दत्ता, द्वितीया तु मोहमयीस्थेनापरेण पण्डितेन एल्फिन्स्टन्–विद्यालये दत्ता । किंतु व्याख्यानविषयस्य सार्वजनीनत्वं, श्रोतृवर्गस्य न केवलं संख्याकृतं किंतु अधिकारकृतमपि गौरवं, तथा व्याख्याकृतां सरला, मनोहारिणी च व्याख्यानसरणी, इत्येत्सर्वं मनसि कृत्वा विचार्यमाणे इयं व्याख्यानश्रेणिर्यथा सुश्लिष्टा सौभाग्यावहा च संजाता तथा न मन्ये अपरा कापि । अत एव प्राच्यविद्यासंशोधनमन्दिराधिकृता विज्ञप्तिर्यथा अतःपरं यदीदृशी कापि विषयान्तरमधिकृत्य व्याख्यानश्रेणिः शिक्षणाधिकारिभिर्निश्चीयेत* तर्हि सापि अत्रैव संशोधनमन्दिरे भवितुमर्हति । तदर्थं च यः कोपि अल्पो वा भूयान् वा व्ययः अपेक्ष्यते तं कर्तुं मन्ये मन्दिराधिकारिणः सुतरां सज्जाः सुप्रीताश्च भवेयुः । अस्तु नाम । इदानीं युष्मदनुज्ञया एतत् राजदत्तं पारितोषिकं व्याख्यातृभ्यः प्रदातुमध्यक्षमहाशयान् विज्ञापयामि ।

अपरं चान्यदपि निवेदनीयमस्ति । विदितमेव स्यादेतदत्र भवतां सभास्ताराणां यथा एते वेदान्तवागीशाः श्रीधरशास्त्रिणः त्रिचतुरमासानन्तरं सेवानिवृत्ता भूत्वा

---

* अहो दौर्भाग्यमस्माकं यत्तथास्माभिर्मुक्तकण्ठमभिनन्दिता राज्याधिकारिणामियं प्रवृत्तिरेतद्व्याख्यानषट्कात्मकं चरमं फलं प्रदर्श्य नितरां विरामं प्राप्ता वर्तते इति । सर्वेषां सुपरिचिता आर्थिकी दुःस्थितिरत्र कारणत्वेनापदिश्यते किल । दैवो दुर्बलघातकः – इति न्यायेन तत्तु यथाकथंचिच्छ्रद्धातव्यमेव । अपि नाम कोपि विद्यारसिको विद्याधिकारिभिः स्वस्कन्धादपरोपितामिमां धुरं वोढुमग्रेसरो भवेत् ।

अस्माकमिदं लौकिकं सार्वजनिनं पुण्यपत्तनं विहाय नर्मदातीरे वसन्तः तत्रैव किमपि पारलौकिकं पुण्यपत्तनं आरचयितुकामाः किल । इयं हि सुमहती हानिः स्यादस्माकं पुण्यपत्तनस्य यत् श्रीधरशास्त्रिसदृशं विद्यारत्नं पुण्यपत्तने एव सेवा-निवृत्त्यनन्तरमपि सुप्रातिष्ठितं न भवति । भवतु । दुरुल्लंघनीयो हि विधिः । एतैः श्रीधरशास्त्रिभिः अस्माकं प्राच्यविद्यासंशोधनमन्दिरद्वारा प्रकाश्यमानायां ग्रन्थ-श्रेण्यां त्रिचतुराः पाण्डित्यप्रचुराः ग्रन्था ग्रथिता वर्तन्ते – यथा स्वनिर्मितबाल-बोधिनीसमेतं वाल्लभीयमणुभाष्यम्, पातञ्जलमहाभाष्यशब्दसूचिश्च । अपरेपि सटीका ग्रन्था एतैर्निर्मिताः प्रायः सर्वेषामत्रभवतां परिचिता एव विद्यन्ते । तथा च संशोधनमन्दिरे यानि व्याख्यानानि एम्. ए. परीक्षार्थं प्रयतमानानां छात्राणां कृते गतत्रिचतुरसंवत्सरेषु प्रदत्तानि तत्रापि एते महाभागाः धर्मवेदान्तालंकारादि-शास्त्रेषु अंशभागिनः आसन् । अतः एतत् सुतरां प्राप्तकालं यत् संशोधनमन्दिरे-णापि पत्रं पुष्पं फलं तोयम् इति न्यायेन किमपि स्मृतिचिह्नं शास्त्रिप्रवरेभ्यः प्रदीयेत । तच्चेदं महावस्त्रं श्रीफलसहितं एभ्यः श्रीमतामध्यक्षाणां हस्तेनात्र सप्र-श्रयं वियोगदुःखोन्मिश्रं च वितीर्यते । तत् स्वीकृत्यात्र भवन्तः श्रीधरशास्त्रिणः अस्माननुपकुर्वन्त्वित्याशंसे ।

---



